द्वारा शुनःशेप नामक स्वपुत्र का वेचना। पुत्र को वेचने के पाप से अजीगर्त को नरक प्राप्ति। रोते हुए पिशाच के प्रति शुनःशेपका प्रश्न ? पिशाच की योनि में पड़े हुए अपने पिता के वचन सुन कर दुःखितअन्तःकरण शुनःशेप द्वारा पिशाच के ऊपर गौतमी जल का छिड़कना। गौतमी जल के स्पर्श होते ही अजीगर्त को विष्णुपद की प्राप्ति। पैशाच तीर्थ की प्रशंसा। पैशाच आदि तीनसौ तीर्थों का वर्णन।

१५१ निम्नभेदतीर्थवर्णनम् ६१०

उर्वशी गमन से दुःखित पुरूरवा के प्रति वसिष्ठ का उपदेश। निम्नभेद आदि सात सौ तीर्थों का वर्णन।

१५२ आनन्दतीर्थवर्णनम् ६१२

चन्द्र द्वारा तारा का हरण। शुक्र के पास गुरु का जाना। शुक्र के लिये स्त्री हरण कथन। तारा को लाने के लिए शुक्र की प्रतिज्ञा। चन्द्र को शुक्र का शाप। तारा की शुद्धि के लिये देवताओं के प्रति शुक्र का प्रश्न ? गङ्गा को गुरु का वचन। आनन्द तीर्थका वर्णन।

१५३ भावतीर्थवर्णनम् ६१८

भावतीर्थ आदि सात तीर्थों का वर्णन।

१५४ सहस्रकुण्डलतीर्थवर्णनम् ६२०

रावणादि को मार कर अयोध्या के प्रति सपरिवार रामका गमन। लोक के अपवाद से बाल्मीकि के आश्रम के

पास राम की आज्ञा से लक्ष्मण द्वारा सीता का त्याग।१
राम के अश्वमेध में लवकुश का जाना। सहस्त्रकुण्डादि
दश तीर्थों का वर्णन।

१५५ कपिलातीर्थवर्णनम् ६२३

अङ्गिरा को दक्षिणा में आदित्य द्वारा भूमिदान। कपिला
संगमादि १०० तीर्थों का वर्णन।

१५६ शङ्खह्रदतीर्थवर्णनम् ६२५

ब्रह्मा को भक्षण करने के लिये आते हुए राक्षसों का विष्णु
चक्र द्वारा वध। शङ्ख तीर्थादि अयुत तीर्थों का वर्णन।

१५७ किष्किन्धातीर्थवर्णनम् ६२६

रावण के मरने पर सीता और लक्ष्मणके साथ श्रीराम का
गौतमी पर आना। रामकृत गौतमी प्रशंसा। राम एवं
वानरों का गौतमी पर स्नान और शिवलिङ्गपूजादि वर्णन।
राम के प्रति विभीषण का वचन। किष्किन्धा तीर्थ का
महत्त्व।

१५८ व्यासतीर्थवर्णनम् ६३२

अङ्गिरसों की उत्पत्ति। माता की आज्ञा के बिना तप करने
के लिए गये हुए आङ्गिरसों को विघ्न होना। अगस्त्य के
आश्रम में आङ्गिरसों का गमन व संवाद। अगस्त्य की
आज्ञा से उनका गौतमी पर आना। व्यास तीर्थ की
महिमा।

१५९ वंजरासंगमतीर्थवर्णनम् ६३६

दास भाव को प्राप्त हुए गरुड़ का अपनी माता विनता के प्रति प्रश्न ? उत्तर में माता ने कहा कि मैं अपने ही अपराध से दासी भाव को प्राप्त हुई हूं। कद्रू के वचन से गरुड़ का सर्पों को सूर्यलोक में ले जाना और उनका अधःपतन। तन्निमित्त कद्रू का विनता के प्रति क्रोधवाक्य। सर्पों की जरा दूर करने के लिये गरुड़ का रसातल से जल लाना। उस जल के प्रोक्षण से सर्पों का जरा दूरीकरण और उसीसे वंजर की उत्पत्ति। वंजर संगमादि सवा लाख तीर्थों का वर्णन।

१६० देवागमतीर्थवर्णनम् ६४२

धन के निमित्त देवदानवों की ईर्षा। ब्रह्माकी आज्ञासे देवताओं का असुरों के साथ युद्धारम्भ। युद्ध के आरम्भ में गौतमी तट पर देवताओं का विष्णु एवं शंकर की स्तुति करना। गौतमी, हरि एवं शंकर की कृपा से देवताओं की विजय।

१६१ कुशतर्पणतीर्थवर्णनम् ६४५

कुशतर्पण तीर्थ का वर्णन। ब्रह्मा की उत्पत्ति और सृष्टिक्रम। यज्ञसामग्री का वर्णन। विराट् पुरुष की उत्पत्ति। प्रणीता संगम कुश तीर्थ आदि छियासी हजार तीर्थों का वर्णन।

१६२ मन्युतीर्थवर्णनम् ६५३

अपनी विजय के लिए और शूरवीर पुरुष की प्राप्ति के लिए देवताओं द्वारा महेश्वर की स्तुति। शंकर की कृपा से प्राप्त मन्यु नामक पुरुष के प्रति सामर्थ्यपरीक्षा के लिये देवताओं का वचन। मन्यु के स्वरूप का वर्णन। देवों द्वारा मन्यु को स्तुति। मन्यु के आश्रय से देवताओं को विजय प्राप्ति।

१६३ सारस्वततीर्थवर्णनम्, ब्रह्मरूपधारिपरशुनामक-
रक्षसउपाख्यानम् ६५७

परशु नामक राक्षस ने ब्राह्मण रूप धारण कर शाकल्य मुनि से कहा कि मुझे भोजन दो।

दूरादभ्यागतं श्रान्तमनुगच्छन्ति देवताः।
तस्मिंस्तृप्ते तु तृप्ताः स्युरतृप्ते तु विपर्ययः॥
अतिथिश्चापवादी च द्वावेतौ विश्ववान्धवौ।
अपवादी हरेत्पापमतिथिः स्वर्गसङ्क्रमः॥
अभ्यागतं पथिश्रान्तं सावज्ञं योऽभिवीक्षते।
तत्क्षणादेव नश्यन्ति तस्य धर्मयशःश्रियः॥

भोजन के समय परशु ने शाकल्य से कहा कि मैं ब्राह्मण नहीं हूं तुम्हारा शत्रु हूँ तुम्हें खाने के लिये आया हूँ फिर शाकल्य ने अपना अपूर्व शरीर दिखाया। परशुराक्षस

ने शाकल्यकी स्तुति की। शाकल्यकी आज्ञासे परशु ने सरस्वतीकी स्तुति की और उसको स्वर्ग प्राप्ति।

१६४ चिच्चिकतीर्थवर्णनम् ६६३

पवमान राजा का चिच्चिक नामक पक्षी से संवाद। पवमान राजा के प्रति चिच्चिक पक्षी का पूर्वजन्म वृत्तान्तकथनं। ब्रह्महत्या सदृश पापों का वर्णन।

अविज्ञातं चोपविष्टं बिभेमीति च वादिनम्।
तं यदि क्षत्रियो हन्यात्सतु स्याद्ब्रह्मघातकः॥
अधीतं विस्मरति यस्त्वं करोति तथोत्तमम्।
अनादरश्च गुरुषु तमाहुर्ब्रह्मघातकम्॥
प्रत्यक्षे च प्रियं वक्ति परोक्षे परुषाणि च।
अन्यद्धृदि वचस्यन्यत्करोत्यन्यत्सदैव यः॥
गुरूणां शपथं कर्ता द्वेष्टा ब्राह्मणनिन्दकः।
मिथ्याविनीतः पापात्मा स तु स्याद्ब्रह्मघातकः॥
देवं वेदमथाध्यात्मं धर्मब्राह्मणसंगतिम्।
एतान्निन्दति यो द्वेषात्सतु स्याद्ब्रह्मघातकः॥

चिच्चिक की मुक्ति के लिए राजा का प्रश्न। चिच्चिक ने राजा से प्रार्थना की कि मुझे मुक्तिके लिए श्वेत पर्वत स्थित भगवान् गदाधर के पास ले चलो। राजाके साथ गंगा, और गदाधर के दर्शन के लिए चिच्चिक का गमन। चिच्चिक द्वारा गंगा का स्तवन एवं स्वर्ग प्राप्ति। राजा पवमान का अपने सेवकों के साथ अपने नगर में आना।

१६५ भद्रतीर्थवर्णनम् ९६८

कन्या के विवाह विषय में सूर्य का विचार। विवाह की अवधिकथन। कन्यादान के लिए कुल आदि का विचार। कन्या की प्रशंसा। कन्या आदि के विक्रय में निषेध। विवाह काल के उल्लङ्घन में दोष वर्णन। विश्वरूप और विष्टि का विवाह। भद्रतीर्थ का वर्णन।

१६६ पतत्रितीर्थवर्णनम्। ९७४

पतत्रि तीर्थ का वर्णन।

१६७ विप्रतीर्थवर्णनम् ९७५

सोते हुए ब्राह्मण पुत्र आसन्दिव को लेकर राक्षसी का भागना। आसन्दिव और राक्षसी का संवाद। किसी ब्राह्मण कन्या के साथ आसन्दिव का विवाह। नारायण द्वारा राक्षसी का वध। विप्रतीर्थ का वर्णन।

१६८ भानुतीर्थवर्णनम् ९८०

राजा अभिष्टुत का हयमेध आरम्भ। याचना का लघुत्व वर्णन। ब्राह्मण वेशधारि दैत्यों का यज्ञ में जाना। भान्वादि सौ तीर्थों का वर्णन।

१६९ भिल्लतीर्थवर्णनम् ९८४

वेद नामक ब्राह्मण का शिवपूजा के अनन्तर भिक्षाटन के लिए गमन। व्याध का शिवपूजा प्रकार। विधान से की

हुई पूजा को विध्वंस करनेवाले के लिए वेद के मन में क्रोध की उत्पत्ति। आदिकेश और वेद का संवाद। व्याध की भक्ति का वर्णन। व्याध को वर प्राप्ति।

१७० चक्षुस्तीर्थवर्णनम् ९८९

चक्षु तीर्थ का वर्णन। गौतम और कुण्डल का धन उपार्जन विषयक संवाद। पुत्र धर्म का वर्णन। धर्म की प्रशंसा। धर्म प्रशंसा करने वाले कुण्डल के नेत्रों का नाश। विभीषण का पुत्र के साथ संवाद। कुण्डल वैश्य को नेत्रादि का प्राप्ति। महाराजा नामक राजा की पुत्री को नेत्रों की प्राप्ति (वह जन्मान्ध थी)। कुण्डलको राजकन्याकी प्राप्ति।

१७१ उर्वशीतीर्थवर्णनम् ९९९

इन्द्र और प्रमिति का संवाद। इन्द्र और प्रमिति का क्रीडन वर्णन। प्रमिति और चित्रसेन का क्रीडन वर्णन। मधुच्छन्द के साथ प्रमिति पुत्र सुमति के द्वारा प्रमिति को पाशा खेलने से गये हुए राज्य की प्राप्ति। श्रेष्ठ पुरुषों के लिये बिना छलकी वृत्ति का विधान।

अकैतवी च या वृत्तिः सा प्रशस्ता द्विजन्मनाम्।
कृषिगोरक्ष्यवाणिज्यमपि कुर्यान्न कैतवम्॥
यस्तु कैतववृत्त्या हि धनमाहर्तुमिच्छति।
धर्मार्थकामाभिजनैः स विमुच्येत पौरुषात्॥

७२ समुद्रतीर्थवर्णनम् १००५

गङ्गा और सागर का संवाद। गङ्गा के सप्त रूप का वर्णन।

१७३ भीमेश्वरतीर्थवर्णनम् १००८

गङ्गा के सात नामों का वर्णन।

सप्तधा व्यभजन् गङ्गामृषयः सप्त नारद।
वाशिष्ठी दाक्षिणेयी स्याद्वैश्वामित्री तदुत्तरा॥
वामदेव्यपरा ज्ञेया गौतमी मध्यतः शुभा।
भारद्वाजी स्मृता चान्या आत्रेयी चेत्यथापरा॥
जामदग्नी तथा चान्या व्यपदिष्टा तु सप्तधा।

ऋषि यज्ञ में देव शत्रु विश्वरूप का आगमन। विश्वरूप और ऋषि का संवाद।

कर्मणा तात लभ्यन्ते फलानि विविधानि च।
त्रयाणां कारणानां च कर्म प्रथमकारणम्॥
कर्मणां कारणत्वं च कारणे पुष्कले सति।
भावाभावौ फले दृष्टौ तस्मात्कर्माश्रितं फलम्॥
भावात्प्रारभते तद्वद्भावैः फलमवाप्यते।
धर्मार्थकाममोक्षाणां कर्म चैव हि कारणम्॥
भावस्थितं भवेत्कर्म मुक्तिदं बन्धकारणम्।
स्वभावानुगुणं कर्म स्वस्यैवेह परत्र च।

भीमेश्वर तीर्थ का वर्णन।

१७४ गङ्गासागरसंगमवर्णनम्, सोमतीर्थवर्णनम् १०१२

गङ्गा और सागर का संगम वर्णन। देवताओं द्वारा हर और विष्णु का स्तवन। सोम तीर्थ का माहात्म्य। नारदकृत

सोम स्तुति। आदित्य और बार्हस्पत्यादि तीर्थों का वर्णन।

१७५ तीर्थादीनांचातुर्विध्यादिनिरूपणम् १०१६

गंगा की ब्रह्मा के कमण्डलु में, विष्णुके पद में, शिवजी की जटाजूट में, ब्रह्मगिरि में और पूर्व समुद्र में क्रम से स्थिति का वर्णन। चार प्रकार के तीर्थों का बताना। तीर्थों का सत्ययुगादि में क्रम से त्रिदेवत्व भाव होने से कलियुग में भी दैवत भाव का निरूपण बताया है। तीर्थों का युग क्रम से दैव, आसुर, आर्ष और मनुष्यत्व प्राप्ति का वर्णन। गणेशजी को शंकर की जटा से गंगावतरण का पार्वती द्वारा कथन। पार्वती और गणेशजी के संवाद में ब्रह्मगिरि पर्वत से समुद्र पर्यन्त गौतमी के दोनों तटों की स्थिति विषयक गौतम के प्रति हर्षपुलकित शिवजी का वर प्रदान। शिवजी द्वारा वर्णित गौतमी की यात्रादि का वर्णन। विस्तार सहित गौतमी माहात्म्य का फल कथन।

१७६ अनन्तवासुदेवमाहात्म्यवर्णनम् १०२६

अनन्तवासुदेव भगवान् का माहात्म्य। ब्रह्माजी की विश्वकर्मा को वासुदेव भगवान् की मूर्ति बनाने के लिये आज्ञा। देवताओंके साथ रावणका संग्राम। रावण द्वारा इन्द्रकी पराजय। रावणका इन्द्रपुरी में गमन। वहाँ पर स्थित भगवान् वासुदेवकी मूर्तिको पुष्पक विमान द्वारा लङ्कामें ले जाना। रावणसे विभीषणको मूर्तिकी

प्राप्ति। राम और रावण का युद्ध। युद्ध में रावण की मृत्यु। भगवान् राम का अयोध्या के प्रति गमन।

१७७ पुरुषोत्तमक्षेत्रमाहात्म्यवर्णनम् १०३२

पुरुषोत्तम क्षेत्र के माहात्म्य का वर्णन।

१७८ कण्डुचरित्रवर्णनम् १०३६

कण्डु के आश्रम में तपनाश करने के लिये प्रम्लोचा का जाना। कण्डु और प्रम्लोचा का संवाद। तप नष्ट होने से कण्डु का पुरुषोत्तम क्षेत्र में जाना और विष्णु की स्तुति एवं वरदान की प्राप्ति तदनन्तर मुक्ति। कण्डु की आख्यायिका का पठन एवं श्रवण का फल और पुरुषोत्तम क्षेत्रकी महिमा का वर्णन।

१७९ बादरायणं प्रतिश्रीकृष्णावतारविषयको मुनीनां प्रश्नः १०५६

संशयाविष्ट मुनियों द्वारा कृष्णावतार के विषय में व्यासजी से प्रश्न।

वसुदेवकुले धीमान्वासुदेवत्वमागतः।
अमरैश्चाऽऽवृतं पुण्यं पुण्यकृद्भिरलंकृतम्॥
देवलोकं किमुत्सृज्य मर्त्यलोक इहाऽऽगतः।
देवमानुषयोर्नेता द्योर्भुवः प्रभवोऽव्ययः॥
किमर्थं दिव्यमात्मानं मानुषेषु न्ययोजयत्।
यश्चक्रं वर्तयत्येको मानुषाणामनामयम्॥



१८० श्रीकृष्णचरितारम्भः । चतुर्व्यूहवर्णनम् । १०६३

मुनियों के प्रश्नोत्तरमें व्यासकृत भगवत्स्तुति व नानावतारों का वर्णन। चतुर्व्यूहकथन।

१८१ अवतारप्रयोजनवर्णनम् १०६८

भाराक्रान्तायाः पृथ्व्या ब्रह्मणः समीपेगमनम्।

ब्रह्माणं प्रति भगवद्वाक्यम्। हरेरंशावतारनिरूपणम्।

भगवान् के अवतार धारण करने का प्रयोजन वर्णन। भार से पीड़ित पृथ्वी का ब्रह्माजी के पास जाना और अपने दुःख का निवेदन।

अग्निः सुवर्णस्य गुरुर्गवां सूर्योऽपरो गुरुः।
ममाप्यखिललोकानां वन्द्योनारायणोगुरुः॥
तत्सांप्रतमिमेदैत्याः कालनेमिपुरोगमाः।
मर्त्यलोकं समागम्य बाधन्तेऽहर्निशं प्रजाः॥

भगवान् की प्रशंसा से गर्वित देवताओं के प्रति ब्रह्माजी का कथन। ब्रह्माजी द्वारा विष्णुस्तुति। स्तुतिश्रवण के अनन्तर विष्णु के द्वारा ब्रह्मा को सफेद और कृष्ण दो केशों का दान। विष्णु की सहायता के लिये इन्द्रादि देवताओं का अवतार। नारदजी ने कंस से कहा कि देवकी के आठवें गर्भ से तुम्हारी मृत्यु होगी ऐसा सुन कर क्रोधित कंसने वसुदेव तथा देवकीको कारागारमें डाल दिया। देवकी

के छे पुत्रों का कंस द्वारा वध। विष्णु और माया के संवाद में माया के प्रति भगवान् की आज्ञा।

त्वं भूतिः संनतिः कीर्तिः कान्तिर्वै पृथिवी धृतिः।
लज्जा पुष्टिरुषा या च काचिदन्या त्वमेव सा॥
ये त्वामार्येति दुगति वेदगर्भेऽम्बिकेति च।
भद्रेति भद्रकालीति क्षेम्या क्षेमंकरीति च॥
प्रातश्चैवऽपराह्णे च स्तोष्यन्त्यानम्रमूर्तयः।
तेषां हि वाञ्छितं सर्वं मत्प्रसादाद्भविष्यति॥

१८२ श्रीकृष्णोत्पत्तिकथानिरूपणम्। १०७४

भगवान् की आज्ञासे माया द्वारा देवकी के गर्भ का आकर्षण और रोहिणी के गर्भ में स्थापन। यशोदा के उदर में माया की स्थिति। देवकी के उदर में भगवान् का प्रवेश। भगवान् के अवतार के समय देवताओं द्वारा पुष्प वृष्टि। वसुदेव देवकी द्वारा भगवान् की स्तुति। देवकीके प्रति भगवान् का वचन। गोकुल में जाकर वसुदेव द्वारा यशोदा के गृह में पुत्रकी स्थापना कर कन्या को लाना। बालक का रोना सुन कर देवकी के पुत्र जन्म का दूतों द्वारा वर्णन। कारागार में कंस का आगमन। बलात्कार से कंस द्वारा रोती हुई देवकी से कन्या का आकर्षण तत्पश्चात् माया का स्वर्ग गमन।

१८३ कंसविचारकथनम्। १०७८

अशान्त कंस द्वारा प्रलम्बादि दैत्यों को कन्या का वृत्तान्त

कथन। कंस ने दैत्यों को बालकों के मारने का आदेश दिया। कंस ने वसुदेव देवकी के बन्धन को खोल कर उन्हें शान्ति करवाई।

१८४ श्रीकृष्णबालचरितवर्णनम्। १०७६

मथुरा में ही नन्द के पास वसुदेव का जाना। वसुदेव और नन्द का प्रेम संवाद। वसुदेव की आज्ञा से नन्दादि गोपों का गोकुल में आना। कृष्ण के द्वारा पूतना का वध। गोपुच्छादि से कृष्ण की रक्षा। नन्द ने कृष्ण का स्वस्ति-वाचन करवाया। बालक के चरण प्रहार से शकट (गाड़ा) का गिरना। उससे गोपियों को आश्चर्य। तदनन्तर यशोदा द्वारा शकट की पूजा। वसुदेव से प्रेरित गर्ग द्वारा गुप्त रूप से बालकों का नामकरण। बाललीला का वर्णन। यमलार्जुन का उद्धार। उत्पातों के भय से गोप गोपियों का वृन्दावन प्रवेश। वृन्दावन की शोभा का वर्णन। बालकों की क्रीडा का वर्णन।

१८५ कालीयदमनाख्यानम्। १०८५

बलराम के बिना गोपों के साथ कृष्ण का कालीयहृद पर आगमन। उसको विषयुक्त देख कर कृष्ण का कालीयहृद में कूदना। वहाँ पर सपरिवार कालीय का आगमन एवं कृष्ण को डँसना। गोपियों का विलाप। नन्दादिकों के दुःख को छुड़ाने के लिए बलदेव का कृष्ण के प्रति स्पष्टी-

करण। नागपत्नी द्वारा कृष्ण की स्तुति। कालीय द्वारा कृष्ण की स्तुति। समुद्र में जाने के लिये कालीय के प्रति कृष्ण की आज्ञा। सपरिवार कालीय का समुद्र के प्रति गमन। कृष्ण का ह्रद से बाहर आना।

१८६ धेनुकवधाख्यानम्। १०९१

गोपों के साथ बलराम और कृष्ण का ताल वन के प्रति जाना। ताल फल की इच्छा से गोपों का रामकृष्ण के प्रति विज्ञापन। रामकृष्ण द्वारा तालफल को गिराना। धेनुकासुर द्वारा रामकृष्ण के वक्षस्थल का ताड़न। कृष्ण द्वारा धेनुकासुर का वध।

१८७ रामकृष्णकृतबहुविधलीलावर्णनम् १०९३

वाह्यवाहक लक्षण खेल के मिष से बलदेव द्वारा प्रलम्बासुर का वध। गोपों द्वारा वलराम की प्रशंसा। व्रज के प्रति गमन। शरद् का वर्णन। गोवर्धनलीला का वर्णन।

१८८ गोवर्धनाख्यानवर्णनम् ११००

कृष्ण द्वारा गोवर्धन पर्वत का उद्धार और इन्द्र का मान भंग। इन्द्र द्वारा कृष्ण स्तुति। कृष्ण को गोविन्द नामकी प्राप्ति। इन्द्र द्वारा अर्जुन के विषय में प्रार्थना। इन्द्र और कृष्ण का अपने २ स्थान में जाना।

१८९ अरिष्टवधनिरूपणम् ११०५

रासक्रीड़ा का वर्णन और अरिष्टासुर का वध।

१६० केशिवधनिरूपणम् ११११

कंस और नारद का सम्वाद। बलराम और कृष्ण को लाने के लिये कंस का अक्रूर को भेजना। बलराम और कृष्ण को मारने के लिये कंस की मल्लयुद्धयोजना। कृष्ण के वध के लिये केशि का वृन्दावन जाना। केशि के शब्दों गोपों को भय। कृष्ण द्वारा केशि वध। नारदकृत कृष्णवर्णन।

१६१ अक्रूरगमनवर्णनम् १११६

अक्रूर का गोकुल गमन। अक्रूर द्वारा कृष्ण का वर्णन।

१६२ अक्रूरप्रत्यागमनवर्णनम् ११२०

अक्रूर द्वारा कृष्ण को नमस्कार। अक्रूर द्वारा कंस की उक्ति का कथन। कंस के वध के लिये कृष्ण की उक्ति। मथुरा के लिये राम कृष्ण और अक्रूर का गमन। कृष्ण के गमन से दुःखित गोपियों का परस्पर संभाषण। यमुना जल में अक्रूर को भगवान् के दर्शन। अक्रूर द्वारा कृष्ण स्तुति। कृष्ण और अक्रूर का संवाद। मथुरा में बलराम और कृष्ण का पराक्रमवर्णन।

१६३ कुब्जोद्धारवर्णनम्। कंसवधनिरूपणम् ११२६

कुब्जा के प्रति कृष्ण का कथन। कृष्णकृत अनुग्रह वर्णन। बलराम और कृष्ण को मारने के लिये चाणूर व मुष्टिक को कंस की आज्ञा। नागरिकों द्वारा बलराम और कृष्ण का

वर्णन। कृष्ण और चाणूर का युद्ध। मुष्टिक और बलराम का युद्ध। चाणूर और मुष्टिक का वध। कंस वध। वसुदेव द्वारा भगवत्स्तुति।

१६४ देवकीवसुदेवाभ्यां सह कृष्णसंवादः ११३६

देवकी और वसुदेव के साथ कृष्ण का संवाद। कृष्ण द्वारा कंस की पत्नी का समाधान। कृष्ण द्वारा उग्रसेन का राज्याभिषेक। उग्रसेन को सुधर्मा नामक सभा की प्राप्ति। बलदेव और कृष्ण को गुरु सांदीपनि द्वारा अस्त्रप्रदान। सांदीपनि को पुत्रप्राप्ति।

१६५ जरासन्धेन सह रामजनार्दनयुद्धवर्णनम् ११४२

जरासंध के साथ रामजनार्दन का युद्ध। जरासंध का तिरस्कार। जरासंध का युद्ध के लिये फिर आना। जरासंध की पराजय।

१६६ कालयवनोपाख्यानम् ११४४

कालयवन की उत्पत्ति का वर्णन। कालयवन द्वारा यादवों का नाश। यादवों की रक्षा के लिये कृष्ण द्वारा द्वारका का निर्माण। मुचुकुन्द द्वारा कालयवन का नाश। मुचुकुन्द द्वारा भगवत्स्वरूप का वर्णन।

१६७ गोकुले बलप्रत्यागमनवर्णनम् ११४६

मुचुकुन्द को भगवान् का वर प्रदान। तप के लिये मुचुकुन्द

का गन्धमादन के प्रति गमन। बलदेवजी का गोकुल में आना।

१९८ हलक्रीडावर्णनम् ११५१

वरुण और वारुणी का संवाद। यमुना और बलदेवजी का संवाद। बलदेवजी का मथुरा में गमन।

१९९ रुक्मिणीविवाहवर्णनम् ११५३

कृष्ण द्वारा रुक्मिणी का हरण। कृष्ण से रुक्मी की पराजय। रुक्मिणी विवाह एवं प्रद्युम्न की उत्पत्ति।

२०० प्रद्युम्नाख्यानवर्णनम् ११५५

शम्बरासुर द्वारा प्रद्युम्न का हरण। शम्बर का प्रद्युम्न को समुद्र में फेंकना। मत्स्य के उदर से शम्बर की स्त्री को प्रद्युम्न की प्राप्ति। शम्बर की स्त्री से नारद का संवाद। शम्बर और प्रद्युम्न का युद्ध। शम्बर का वध। द्वारका में प्रद्युम्न का आगमन। श्रीकृष्ण नारद संवाद।

२०१ अनिरुद्धविवाहे रुक्मिवधनिरूपणम् ११५८

रुक्मिणी के पुत्रों के नाम। कृष्ण की स्त्रियों के नाम। अनिरुद्ध का विवाह। रुक्मी और बलदेव का द्यूत वर्णन। बलदेव द्वारा रुक्मी का वध।

२०२ नरकवधवर्णनम् ११६२

इन्द्र का द्वारका में आना। इन्द्र द्वारा नरकासुर की चेष्टा का वर्णन। ज्योतिषपुर के प्रति कृष्ण का गमन। कृष्ण

द्वारा मुरदैत्य का वध। कृष्ण द्वारा नरकासुर का वध। पृथ्वी द्वारा कृष्ण को कुण्डल दान। अदितिको कुण्डल देने के लिये भगवान् का स्वर्गगमन।

२०३ अदितिकृता भगवत्स्तुतिः ११६६

पारिजातहरणवर्णनम्। शक्रस्तववर्णनम्

अदितिकृत भगवत्स्तुति। कृष्ण और अदिति का संवाद। सत्यभामाके वचनसे कृष्ण द्वारा कल्पवृक्ष का लाना। वनपालों के साथ श्रीकृष्ण का संवाद। वनपालों को सत्यभामा की गर्वोक्ति। देवताओं के साथ श्रीकृष्ण का युद्ध। इन्द्र के साथ सत्यभामा का संवाद। इन्द्र द्वारा भगवद्वर्णन।

२०४ इन्द्रकृष्णसंवादवर्णनम् ११७४

इन्द्र के साथ श्रीकृष्ण का संवाद। द्वारका में भगवान् का आगमन। कल्पवृक्ष का वर्णन।

२०५ अनिरुद्धचरित्रवर्णनम्। बाणयुद्धवर्णनम्। ११७५

रूक्मिणी आदि स्त्रियोंके पुत्र एवं पौत्रोंके नामोंका वर्णन। उषा और अनिरुद्ध के विवाह का कथन। बाणासुर की लड़की उषा का गौरी से संवाद। चित्रलेखा की लेखनकला की चतुरता का वर्णन।

२०६ बाणयुद्धवर्णनम् ११७६

भगवान् शंकर के साथ बाणासुर का संवाद और युद्ध के

लिये प्रार्थना। उषा के अन्तःपुर में चित्रलेखा द्वारा अनिरुद्ध का लाना। बाणासुर और अनिरुद्ध का युद्ध। अनिरुद्ध का बन्धन। कृष्ण और बलदेव का युद्ध के लिये आना। बाणासुर के साथ भगवान् का युद्ध। भगवान् और शंकरका युद्ध। हरिहर संवाद। भगवान् का सपत्नीक अनिरुद्ध के साथ द्वारका में आना।

२०७ पौण्ड्रकवधवर्णनम् ११८४

काशिराज पौण्ड्रक के दूत का द्वारका में आगमन। दूत के साथ कृष्ण का संवाद। श्रीकृष्ण के साथ पौण्ड्रक का युद्ध। पौण्ड्रक का वध। शंकर के वरदान से काशिराज के पुत्र द्वारा कृत्या का उत्पादन। सुदर्शन चक्र के भय से कृत्या का वाराणसी में प्रवेश। चक्र द्वारा वाराणसी का दाह पश्चात् चक्र का कृष्ण के हाथ में वापिस आना।

२०८ बलदेवमाहात्म्यवर्णनम् ११८६

व्यास और ऋषियों के संवाद में बलदेवजी के पराक्रम का वर्णन। साम्ब द्वारा दुर्योधन की कन्या का हरण। दुर्योधनादिकों द्वारा साम्ब का बन्धन। बलदेवजी का हस्तिनापुर में आगमन। कौरवों के साथ बलदेव का संवाद। बलदेव कृत हस्तिनापुर का आकर्षण। कौरवों द्वारा बलदेव की प्रार्थना।

२०९ द्विविदवानरवधवर्णनम् ११९३

व्यासजी और ऋषियों का संवाद। बलदेव कृत द्विविद-वानर वध।

२१० भूमिभारावतरणकथनम्। यादवकुलसंहार-वर्णनम्। ११९६

व्यासजी और ऋषियों के संवाद में भूमि के भारावतरण का कथन। यादव कुल के उपसंहार का वर्णन। भगवान् का द्वारका त्याग तथा निजधाम गमन। यादवों के शाप का हेतु कथन। देवताओं द्वारा भेजे हुए दूत का आगमन तथा कृष्ण के साथ संवाद। महोत्पातों के शमन के लिये यादवों का प्रभास में जाना। भगवान् का उद्धव के साथ संवाद। यादवों का नाश वर्णन।

२११ कृष्णमानुषोत्सर्गकथनम् १२०२

भगवान् की कृपा से लुब्धक ( व्याध ) का स्वर्ग गमन।

२१२ रुक्मिण्यादीनां परलोकगमनम् १२०४

आभीरार्जुनसंवाद कथनम्। आभीरार्जुनयुद्धवर्णनम्। अर्जुनविषादकथनम्। व्यासार्जुनसंवादकथनम्। अष्टावक्राख्यानम्।

रुक्मिणी आदि रानियों का स्वर्गारोहण। आभीर और

अर्जुन का संवाद एवं युद्ध। अर्जुन की पराजय। म्लेच्छों द्वारा श्रेष्ठ स्त्रियों का हरण। अर्जुन के विषाद का वर्णन। व्यासजी और अर्जुन के संवाद में व्यासजी द्वारा अर्जुन का समाधान। अष्टावक्र के आख्यान का वर्णन। अष्टावक्र के तप का वर्णन। तिलोत्तमा रम्भा आदि अप्सराओं द्वारा अष्टावक्र की प्रशंसा। रम्भा को पुरुषोत्तम पति प्राप्ति रूप अष्टावक्र का वर प्रदान। जल से वाहर आये मुनि के शरीर का टेढापन देख कर रम्भा द्वारा हास्य। रम्भा के हास्यसे कुपित मुनिका शाप पश्चात् प्रसन्न होकर वरप्रदान। सबान्धव पाण्डवों का महाप्रस्थान। परीक्षित् को राज्य दान तदुपरान्त वनगमन। कृष्ण चरित्र की समाप्ति कथन।

२१३ वराहावतारवर्णनम्। नृसिंहावतारवर्णनम् १२२४
वामनावतारवर्णनम्। दत्तात्रेयावतारवर्णनम्।
परशुरामावतारवर्णनम्। रामावतारवर्णनम्।
विष्णोःप्रादुर्भावानुकीर्त्तनम्।

वराह अवतार का वर्णन। वराहरूपी परमेश्वर के शरीर के अङ्गों का वर्णन। यज्ञवराह कृत पृथ्वी का उद्धरण। नृसिंह अवतार का वर्णन। हिरण्यकशिपु के तप का वर्णन एवं वरप्रदान। ब्रह्मा के साथ देवताओं का भगवान् के पास गमन। देवताओं द्वारा भगवान् की स्तुति। भगवान् का नृसिंह रूप में अवतरित होना। नृसिंह भगवान् द्वारा

हिरण्यकशिपु का वध। वामन अवतार का वर्णन। दैत्यों की नामावली का कथन। दत्तात्रेय के अवतार का वर्णन। परशुराम के अवतार का वर्णन। संक्षेप से श्रीराम चरित्र का वर्णन। श्रीकृष्णावतार वर्णन। कल्कि अवतार का वर्णन। भगवान् के अवतारों के चरित्रों का श्रवण एवं पठन का फल।

२१४ नरकाणांवर्णनम्। यमयात्रावर्णनम् १२३३

नरकों के नाम तथा वर्णन। देहत्याग का वर्णन।

तस्यान्ते च स्वयं प्राणैरनिच्छन्नपि मुच्यते।
जलमग्निर्विषं शस्त्रं क्षुद्व्याधिः पतनं गिरेः॥
निमित्तं किंचिदासाद्य देही प्राणैर्विमुच्यते।
विहाय सुमहत्कृत्स्नं शरीरं पाञ्चभौतिकम्॥
ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः।
भिनत्ति मर्मस्थानानि दीप्यमानो निरन्धनः॥
उदानो नाम पवनस्ततश्चोर्ध्वं प्रवर्तते।
भुज्यता ( क्ताना ) मम्बुभक्ष्याणामधोगतिनिरोधकृत्॥
ततो येनाम्बुदानानि कृतान्यन्नरसास्तथा।
दत्ताः स तस्यामाह्लादमापदि प्रतिपद्यते॥

यमदूतों का वर्णन। धार्मिक एवं पापीजनों का वर्णन। यमपुरी का वर्णन एवं पुरी के द्वारों का वर्णन।

२१५ दक्षिणमार्गवर्णनम्, नरकगतपृथग्यातना- १२४६
वर्णनम्।

दक्षिण मार्ग से जाने वाले प्राणियों के दुःखों का वर्णन। चित्रगुप्त द्वारा पापियों का वर्णन। भयंकर नरकोंका वर्णन। अनेक प्रकार के पापों का वर्णन। पापों के अनुरोध से नरक प्राप्ति कथन।

२१६ नरकगतदुःखनिवारणाय धर्माचरणवर्णनम्। १२६०
धार्मिकाणां सुगतिनिरूपणम्

नरकों के दुःख निवारण के लिये मुनियां द्वारा व्यास के प्रति प्रश्न। व्यासजी द्वारा धर्म के आचरण से सुगति प्राप्ति का वर्णन।

प्राणान्त्यजति यो मर्त्यः स्मरन्विष्णुं सनातनम्।
यानेनार्कप्रकाशेन याति धर्मपुरं नरः॥
सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम्।
अमांसभक्षणे विप्रास्तच्च तच्च च तत्समम्॥
ये तु तं धर्मराजानं नराः पुण्यानुभावतः।
पश्यन्ति सौम्यमनसं पितृभूतमिवाऽऽत्मनः॥
तस्माद्धर्मः सेवितव्यः सदा मुक्तिफलप्रदः।
धर्मादर्थस्तथाकामो मोक्षश्चपरिकीर्त्यते॥
धर्मोमाता पिताभ्राता धर्मोनाथःसुहृत्तथा।
धर्मः स्वामी सखागोप्ता तथा धाता च पोषकः॥
धर्मस्तु सेवितोविप्रास्त्रायते महतोभयात्।
देवत्वं च द्विजत्वं च धर्मात्प्राप्नोत्यसंशयम्॥

ये नरा नरकध्वंसिवासुदेवमनुव्रताः ।
ते स्वप्नेऽपि न पश्यन्ति यमं वा नरकार्णवम् ॥
कर्मणा मनसा वाचा येऽच्युतं शरणंगताः ।
न समर्थो यमस्तेषां ते मुक्तिफलभागिनः ॥

२१७ धर्मश्रैष्ठ्यवर्णनम् । शरीरोत्पत्तिकथनम् । १२६६
पुण्यपापानुरोधेन नानायोनिषुजननवर्णनम् ।

धर्म की श्रेष्ठता का वर्णन । शरीर की उत्पत्ति का वर्णन । पुण्य एवं पाप के अनुरोध से अनेक योनियों में जनन वर्णन । तदनन्तर पापपुण्य का वर्णन ।

२१८ अन्नदानप्रशंसावर्णनम् १२८१

शुभप्राप्ति विषयक मुनियों का व्यास के प्रति प्रश्न । अन्नकी प्रशंसा । अन्नदान से शुभ प्राप्ति का कथन ।

नरःकृत्वाऽप्यकर्माणि ततो धर्मेण युज्यते ।
सर्वेषामेव दानानामन्नंश्रेष्ठमुदाहृतम् ॥
सर्वमन्नं प्रदातव्यमृजुनाधर्ममिच्छता ।
प्राणाह्यन्नं मनुष्याणां तस्माज्जन्तुःप्रजायते ॥
अन्ने प्रतिष्ठिता लोकास्तस्मादन्नंप्रशस्यते ।
अन्नमेव प्रशंसन्ति देवर्षिपितृमानवाः ॥
अन्नस्यहि प्रदानेन स्वर्गमाप्नोति मानवः ।
न्यायलब्धं प्रदातव्यं द्विजातिभ्योऽन्नमुत्तमम् ॥

२१९ श्राद्धविधिवर्णनम् १२८४

श्राद्धविधिका निरूपण। पितरेश्वरों के साथ चन्द्रमा की कन्या का संवाद। चन्द्रमा का पितरों को शाप। सोमजा का कोका नामक नदी बनना। पितरों द्वारा भगवान की स्तुति। पितरों के उद्धार का कथन। अग्निकरण और पिण्डदान की विधि।

२२० श्राद्धकल्पवर्णनम् १२९६

श्राद्धकल्प का वर्णन। प्रतिपद् आदि तिथि क्रमसे श्राद्ध करने का फल कथन। सपिण्डीकरण का विधान। श्राद्ध में ब्राह्मण विचार। पिण्डदान कथन।

२२१ सदाचारवर्णनम्। भक्ष्याभक्ष्यवर्णनम् १३१६

सदाचार का कथन।

गृहस्थेन सदा कार्यमाचारपरिरक्षणम्।
न ह्याचारविहीनस्य भद्रमत्र परत्र वा॥
दुराचारोहि पुरुषोनेहाऽऽयुर्विन्दते महन्।
कार्यो धर्मः सदाचार आचारस्यैव लक्षणम्॥

धर्म वर्णन। मलादिकों की त्याग विधिका वर्णन एवं आचमन विधि। अनध्याय कथन। कन्या वर्णन तथा ऋतुकाल में गमनप्रकार। देव पूजा कथन। देवता तथा पितरोंके तर्पण का वर्णन। वैश्वदेव का विधान। विप्रों के बसने योग्य देशों का वर्णन। सूतक का विचार।

२२२ वर्णाश्रमधर्मवर्णनम् १३३२

व्यास और मुनियों के संवाद में वर्णधर्म का कथन।

भृत्यादिभरणार्थाय सर्वेषां च परिग्रहाः।
ऋतुकालाभिगमनं स्वदारेषु द्विजोत्तमाः॥
दया समस्तभूतेषु तितिक्षा नाभिमानिता।
सत्यं शौचमनायासो मङ्गलं प्रियवादिता॥
मैत्री चैवास्पृहा तद्वद्कार्पण्यं द्विजोत्तमाः।
अनसूया च सामान्या वर्णानां कथिता गुणाः॥

२२३ संकरजातिलक्षणवर्णनम् १३३८

उमा महेश्वर संवाद में ब्राह्मणों को शूद्रत्वप्राप्ति कथन। शूद्रादिकों को उत्तम गति प्राप्ति कथन।

शूद्रोऽप्यागमसंपन्नो द्विजो भवति संस्कृतः।
ब्राह्मणो वाऽप्यसद्वृत्तः सर्वसंकरभोजनः॥
स ब्राह्मण्यं समुत्सृज्य शूद्रो भवति तादृशः।
कर्मभिः शुचिभिर्देवी शुद्धात्मा विजितेन्द्रियः॥

२२४ उमामहेश्वरसंवादे मानवानामुत्तमगतिप्राप्ति-
वर्णनम् १३४५

उमा महेश्वर संवाद में मनुष्यों को उत्तम गति प्राप्ति का वर्णन। स्वर्ग प्राप्ति के हेतुभूत धर्म का कथन।

आत्महेतोः परार्थे वा अधर्माश्रितमेव च।
ये मृषा न वदन्तीह ते नराः स्वर्गगामिनः॥

वृत्यर्थं धर्महेतोर्वा कामकारात्तथैव च ।
अनृतं ये न भाषन्ते ते नराः स्वर्गगामिनः ॥
श्लक्ष्णां वाणीं स्वच्छवर्णां मधुरां पापवर्जिताम् ।
स्वागतेनाभिभाषन्ते ते नराः स्वर्गगामिनः ॥
परुषं ये न भाषन्ते कटुकं निष्ठुरं तथा ।
न पैशुन्यरताः सन्तस्ते नराः स्वर्गगामिनः ॥
न कोपाद्व्याहरन्ते ये वाचं हृदयदारिणीम् ।
शान्तिं विन्दन्ति ये क्रुद्धास्ते नराः स्वर्गगामिनः ॥
अरण्ये विजने न्यस्तं परस्वं दृश्यते यदा ।
मनसाऽपि न गृह्णन्ति ते नराः स्वर्गगामिनः ॥
तथैव परदारान्ये कामवृत्ता रहोगताः ।
मनसाऽपि न हिंसन्ति ते नराः स्वर्गगामिनः ॥
अवैरा ये त्वनायासा मैत्रचित्तरताः सदा ।
सर्वभूतदयावन्तस्ते नराः स्वर्गगामिनः ॥

कर्म के फलोदय का फल कथन ।

पापेन कर्मणा देवि युक्तो हिंसादिभिर्यतः ।
अहितः सर्वभूतानां हीनायुरुपजायते ॥
शुभेन कर्मणा देवि प्राणिघातविवर्जितः ।
निक्षिप्तशस्त्रो निर्दण्डो न हिंसन्ति कदाचन ॥
न घातयति नो हन्ति घ्नन्तं नैवानुमोदते ।
सर्वभूतेषु सस्नेहो यथाऽऽत्मनि तथा परे ॥

ईदृशः पुरुषो नित्यं देवि देवत्वमश्नुते ।
उपपन्नान्सुखान्भोगान्सदाऽश्नाति मुदायुतः ॥

२२५ उमामहेश्वरसंवादे देवलोकप्राप्तिकारणकथनम् १३५१
क्रुपणादीनां नरकप्राप्तिकथनम् ।
स्वधर्मनिरतानांवर्णनम् ।

उमामहेश्वर के संवाद में देवलोक प्राप्ति का कथन । कृपणादिकों को नरक प्राप्ति का वर्णन । स्वधर्मरत प्राणियों का वर्णन । पाप में रत प्राणियों को नरक प्राप्ति का कथन ।

२२६ मुनिमहेश्वरसंवादे वासुदेवमहिमवर्णनम् १३५७
मुनि महेश्वर संवाद में वासुदेव भगवान की महिमा एवं भगवत् स्वरूप का वर्णन । मनु के वंश का वर्णन । व्यासजी और मुनियों के संवाद में कृष्णपूजा के फल का कथन ।

२२६ (द्वि०) मुनिव्याससंवादे विष्णुपूजाकथनम् १३६४
वैष्णवानांगतिवर्णनम्

व्यास और मुनियों के संवाद में विष्णु भगवान् की पूजा का वर्णन ।

२२७ व्यासमुनिसंवादेविष्णुपूजाकथनम् । १३६६
चाण्डालराक्षससंवादवर्णनम् । उर्वशीमूर्खसंवादकथनम्

विष्णु भगवान् के जागरणमें भगवद्भजन का फल। चाण्डाल और राक्षस का संवाद।

धर्मार्थकाममोक्षाणां शरीरं साधनं यतः।
महता तु प्रयत्नेन शरीरं पालयेद्बुधः॥
जीवधर्मार्थसुखं नरस्तथाप्नोति मोक्षगतिमग्र्याम्।
जीवन्कीर्तिमुपैति च भवति मृतस्य का कथालोके॥

सत्य की प्रशंसा :—

सत्येनार्कः प्रतपति सत्येनाऽऽपो रसात्मिकाः।
ज्वलत्यग्निश्च सत्येन वाति सत्येन मारुतः॥
धर्मार्थकामसंप्राप्ति मोंक्षप्राप्तिश्च दुर्लभा।
सत्येन जायते पुंसां तस्मात्सत्यं न संत्यजेत्॥
सत्यं ब्रह्म परंलोके सत्यं यज्ञेषु चोत्तमम्।
सत्यं स्वर्गसमायातं तस्मात्सत्यं न संत्यजेत्॥

जागरण की पुण्य प्राप्ति के लिये राक्षस द्वारा मातङ्ग की प्रार्थना। ब्रह्मराक्षस के पूर्वजन्म का कथन एवं राक्षसत्व की प्राप्ति। चाण्डाल के पूर्वजन्म का कथन। मूर्ख ब्राह्मण और उर्वशी का संवाद। शकटदान का माहात्म्य।

२२८ व्यासमुनिसंवादे विष्णुभक्तिहेतुकथनम् १३८५

भगवन्माया वर्णनम्। कामदमनाख्यानम्।

व्यास और मुनियोंके संवादमें विष्णुभक्तिका हेतु कथन। सूर्यादि देवोंकी आराधना कथन। भगवान्की मायाका

कथन। कामदमनका आख्यान। कपालमोचन तीर्थको उत्पत्ति वर्णन। कामदमनका स्वर्गगमन।

२२९ व्यासमुनिसंवादे महाप्रलयवर्णनम् १३९८

कलिस्वरूपवर्णनम्। कलिगत भविष्यकथनम्।

व्यास और मुनियोंके संवादमें महाप्रलयका वर्णन। कलि के स्वरूप का वर्णन। कलियुग में भविष्य का वर्णन।

तपसो ब्रह्मचर्यस्य जपादेश्च फलं द्विजाः।
प्राप्नोति पुरुषस्तेन कलौ साध्विति भाषितुम्॥
ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।
यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्॥
धर्मोत्कर्षमतीवात्र प्राप्नोति पुरुषः कलौ।
स्वल्पायासेन धर्मज्ञास्तेन तुष्टोऽस्म्यहं कलौ॥

२३० व्यासमुनिसंवादे द्वापरयुगान्तकथनम्। १४०६

भविष्यकथनम्

व्यास और मुनियोंके संवादमें द्वापर युगके अन्त का कथन। नष्ट धर्मके निमित्त कारण। भविष्य कथन।

अशिष्टवन्तोऽर्थपरा नरा मद्यामिषप्रियाः।
मित्रभार्यां भजिष्यन्ति युगान्ते पुरुषाधमाः॥
राजवृत्तिस्थिताश्चौरा राजानश्चौरशीलिनः।
भृत्या ह्यनिर्दिष्टभुजो भविष्यन्ति युगक्षये॥
सर्व ब्रह्म वदिष्यन्ति द्विजा वाजसनेयिकाः।

शूद्राभा वादिनश्चैव ब्राह्मणाश्चान्त्यवासिनः ॥
शुक्लदन्ता जिताक्षाश्च मुण्डाः काषायवाससः ।
शूद्रा धर्मं वदिष्यन्ति शाठ्यबुद्ध्योपजीविनः ॥
आयुस्तत्र च मर्त्यानां परं त्रिंशद्भविष्यति ।
दुर्बला विषयग्लाना जराशोकैरभिप्लुताः ॥

२३१ व्यास-मुनिसंवादे प्राकृतप्रतिसंचरकथनम् । १४१५
कल्पमानकथनम्

व्यासजी और मुनियों के संवाद में प्राकृतलय का कथन।
कल्पका मान कथन। नैमित्तिकलय का स्वरूप कथन।

२३२ प्राकृतलयनिरूपणम् १४१६

प्राकृतलय का स्वरूप कथन।

२३३ आत्यन्तिकलय निरूपणम् १४२४

आत्यन्तिकलय का निरूपण। आध्यात्मिकादि तीनों तीर्थोंका कथन। शिरदर्द, जुकाम खाँसी आदि आध्यात्मिक तापका निरूपण। काम क्रोधादि मानसिक तापका निरूपण। मृग पक्षि आदिकोंसे होनेवाले आधिभौतिक तापका वर्णन। गर्भ, जन्म, वृद्धावस्था आदिसे उत्पन्न आधिदैविक तापका कथन। गर्भमें स्थित प्राणीकी दुःखावस्था का निरूपण। बाल अवस्था, वृद्धावस्था और मरणावस्था का वर्णन। पाप कर्मों से नरक प्राप्ति का कथन एवं मुक्ति और ज्ञान की महिमा का वर्णन।

२३४ योगाभ्यास निरूपणम् १४३२

योगाभ्यास का वर्णन।

युक्तनिद्रो जितक्रोधः सर्वभूतहिते रतः ।
सर्वद्वन्द्वसहोधीरः समकायाङ्घ्रिमस्तकः ॥
नाभौ निधाय हस्तौ द्वौ शान्तः पद्मासने स्थितः ।
संस्थाप्य दृष्टिं नासाग्रे प्राणानायम्य वाग्यतः ॥

२३५ सांख्ययोग निरूपणम् १४३७

विस्तार से योग और सांख्य का वर्णन।

सर्वभूतेषु चाऽऽत्मानं सर्वभूतानि चाऽऽत्मनि ।
यदा पश्यति भूतात्मा ब्रह्म संपद्यते तदा ॥
यावानात्मनि वेदाऽऽत्मा तावानात्मा परात्मनि ।
य एवं सततं वेद सोऽमृतत्वाय कल्पते ॥

२३६ ज्ञानिनां मोक्षप्राप्ति निरूपणम् १४४२

ज्ञानियों को मोक्ष प्राप्ति का निरूपण एवं कर्म करने वालों को कर्मानुसार स्वर्गादिलोकों की प्राप्तिका वर्णन। आकाशादि पञ्चमहाभूतों के गुणों का वर्णन।

२३७ गुणसर्जनकथनम्। सर्वधर्मविशिष्टधर्मनिरूपणम् १४५१

गुणों की रचना का वर्णन। विद्वान् को अभय और मूर्ख को भय की प्राप्ति का वर्णन। सब धर्मों में विशिष्ट धर्म का वर्णन। क्षमादि से क्रोधादिका नाश बताया है।

परित्यज्य निषेवेत यथावद्योगसाधनात् ।
ध्यानमध्ययनं दानं सत्यंह्रीरार्जवं क्षमा ॥
शौचमाचारतः शुद्धिरिन्द्रियाणां च संयमः ।
एतैर्विवर्धते तेजः पाप्मानमुपहन्ति च ॥

२३८ योगविधिनिरूपणम् १४५८

योग विधि का निरूपण । योग और सांख्य के मत को जानने वालों की दया आदि आचरणों की समानता का कथन । विशेषता से योगी की प्रशंसा का वर्णन । योगी के आहार का वर्णन ।

कणानां भक्षणे युक्तः पिण्याकस्य च भो द्विजाः ।
स्नेहानां वर्जने युक्तो योगी बलमवाप्नुयात् ॥
भुञ्जानो यावकं रूक्षं दीर्घकालं द्विजोत्तमाः ।
एकाहारी विशुद्धात्मा योगी बलमवाप्नुयात् ॥

कामादि सम्पूर्ण शत्रुओं के जय का वर्णन । योग के अभ्यास से नारायण पद की प्राप्ति ।

२३९ सांख्यविधिनिरूपणम् १४६४

सांख्य विधि का निरूपण । मनुष्यादिकों के विषयज्ञान का कथन । सांख्य ज्ञान की महिमा का वर्णन । सांख्य योग से भ्रष्टजनों की उत्तम कुल में उत्पत्ति ।

२४० वशिष्ठकरालजनकसंवादे क्षराक्षर विचार-
निरूपणम् १४७६

क्षर ( नाशवान ) और अक्षर ( ध्रुव ) का वर्णन । मुनियों

द्वारा व्यासजी की प्रशंसा। वशिष्ठ और करालजनक का संवाद। संसार का क्षरत्व से प्रतिपादन और ईश्वर का अक्षरत्व से प्रतिपादन किया है। चौबीस तत्वों का वर्णन एवं तामसादिकों को नरक प्राप्ति तथा निर्गुण को मोक्ष प्राप्ति का कथन।

२४१ वसिष्ठकरालजनकसंवादवर्णनम् १४८५

वशिष्ठ करालजनक का संवाद। क्षर और अक्षर का ज्ञान नहीं होने से बहुविध जन्मों की प्राप्ति। अभिमानी पुरुषों को बहुत से साधनों का कथन।

२४२ वशिष्ठंप्रति मोक्षधर्मविषयको जनकप्रश्नः १४८७

वशिष्ठ के प्रति मोक्ष धर्म के विषय में जनक का प्रश्न। ग्रन्थ के अर्थ ज्ञान के बिना ग्रन्थ का धारण केवल भार के लिये ही है इस प्रकार वर्णन किया है। ग्रन्थ के तत्त्वों को नहीं जान कर जो लोभ से विवाद करता है उसको नरक की प्राप्ति।

यो हि वेदे च शास्त्रे च ग्रन्थधारणतत्परः।
न च ग्रन्थार्थतत्त्वज्ञस्तस्य तद्धारणं वृथा॥
भारं स वहते तस्य ग्रन्थस्यार्थं न वेत्ति यः।
यस्तु ग्रन्थार्थतत्त्वज्ञो नास्य ग्रन्थागमो वृथा॥
ग्रन्थस्यार्थं स पृष्टस्तु मादृशो वक्तुमर्हति।
यथा तत्त्वाभिगमनादर्थं तस्य स विन्दति॥

न यः समुत्सुकः कश्चिद्ग्रन्थार्थं स्थूलबुद्धिमान् ।
स कथं मन्दविज्ञानो ग्रन्थं वक्ष्यामि निर्णयात् ॥
अज्ञात्वा ग्रन्थतत्त्वानि वादं यः कुरुते नरः ।
लोभाद्वाऽप्यथवा दम्भात्स पापी नरकं व्रजेत् ॥
निर्णयं चापि छिद्रात्मा न तद्वक्ष्यति तत्त्वतः ।
सोऽपीहास्यार्थतत्त्वज्ञो यस्मान्नैवाऽऽत्मवानपि ॥

योगलक्षणवर्णनम्, सांख्यज्ञानकथनम् १४६१

योग के लक्षण वर्णन। सांख्य ज्ञान का कथन। क्षेत्र और क्षेत्रज्ञ का लक्षण।

२४३ विद्याविद्ययोः स्वरूपकथनम् १४६५

अक्षरअक्षरयोःपुनर्विस्तरेणवर्णनम्, अभेदेन सांख्य योग कथनम्।

विद्या और अविद्या का स्वरूप कथन। क्षर और अक्षर का विस्तार से वर्णन। अभेद से सांख्य योग का कथन।

२४४ अजस्यापि विक्रियया नानाभवनम् १५००

एकत्वनानात्वयोर्लक्षणम्, ज्ञानविज्ञान-संज्ञितमोक्षवर्णनम्।

अज परमात्मा भी विकारों से अनेक रूपों में भान होता है।

एकत्व और नानात्व का लक्षण। ज्ञान और विज्ञान से संज्ञित मोक्ष का वर्णन। इस ज्ञान को देने के लिये अधिकारी का निर्णय।

न देयमेतच्च यथाऽनृतात्मने;
शठाय क्लीबाय न जिह्मबुद्धये।
न पण्डितज्ञानपरोपतापिने,
देयं तथा शिष्यविबोधनाय॥

जनक के प्रति वशिष्ठजीने कहा—मुझे यह महा ज्ञान ब्रह्माजी से प्राप्त हुआ है। ज्ञान प्राप्ति की परम्परा का कथन।

२४५ अस्यश्रवणपठन कर्तृणांफलप्राप्ति कथनम् १५०७

पुराण को सुनकर प्रसन्न हुए मुनियों द्वारा व्यासजी की प्रशंसा। तदनन्तर सब मुनियों का अपने २ आश्रमों में जाना। ब्रह्मपुराण के श्रवण पठन करनेवालों को फल प्राप्ति का कथन।

२४५ धर्मप्रशंसा वर्णनम् १५११

धर्म की प्रशंसा।

धर्मेण राज्यं लभते मनुष्यः,
स्वर्गं च धर्मेण नरः प्रयाति।
आयुश्च कीर्त्तिश्च तपश्च धर्मं,
ध ण मोक्षं लभते मनुष्यः॥

धर्मोऽत्र मातापितरौ नरस्य,
धर्मः सखा चात्र परे च लोके ।
त्राता च धर्मस्त्विह मोक्षदश्च,
धर्माहृते नास्ति तु किञ्चिदेव ॥

ब्रह्मपुराण की विषय-सूची समाप्त ।

अस्माभिः शोधितं सर्वं पुराणं ब्रह्मसंज्ञितम् ।
शोधने या हि त्रुटयः क्षन्तव्यास्ता महोदयैः ॥

विद्वज्जनचरणयुगलानुरागिणः—

लक्ष्मणदुर्ग वास्तव्य ब्रह्मदत्त त्रिवेदि
नवलदुर्गाभिजन कजोड़ीलालमिश्र रामनाथ दाधीचाः ।

शुभम् ।

ॐ तत्सद्ब्रह्मार्पणमस्तु



॥ श्री गणेशाय नमः ॥



# ब्रह्मपुराणम्

## प्रथमोऽध्यायः

### तत्रादौ नैमिषारण्य वर्णनम्

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥

यस्मात् सर्व्वमिदं प्रपञ्चरचितं मायाजगज्जायते,
यस्मिंस्तिष्ठति याति चास्तसमये कल्पानुकल्पे पुनः।
यं ध्यात्वा मुनयः प्रपञ्चरहितं विन्दन्ति मोक्षं ध्रुवं,
तं वन्दे पुरुषोत्तमाख्यममलं नित्यं विभुं निश्चलम् ॥१॥

यं ध्यायन्ति बुधाः समाधिसमये शुद्धं वियत्सन्निभं,
नित्यानन्दमयं प्रसन्नममलं सर्व्वेश्वरं निर्गुणम्।
व्यक्ताव्यक्तपरं प्रपञ्चरहितं ध्यानैकगम्यं विभुं,
तं संसारविनाशहेतुमजरं वन्दे हरिं मुक्तिदम् ॥ २ ॥

सुपुण्ये नैमिषारण्ये पवित्रे सुमनोहरे।
नानामुनिजनाकीर्णे नानापुष्पोपशोभिते ॥ ३ ॥

सरलैः कर्णिकारैश्च पनसैर्धवखादिरैः।
आम्रजम्बूकपित्थैश्च न्यग्रोधैर्देवदारुभिः ॥ ४ ॥

अश्वत्थैः पारिजातैश्च चन्दनागुरुपाटलैः ।
बकुलैः सप्तपर्णैश्च पुन्नागैर्नागकेशरैः ॥ ५ ॥
शालैस्तालैस्तमालैश्च नारिकेलैस्तथार्ज्जुनैः ।
अन्यैश्च बहुभिर्वृक्षैश्चम्पकाद्यैश्च शोभिते ॥ ६ ॥
नानापक्षिगणाकीर्णे नानामृगगणैर्युते ।
नानाजलाशयैः पुण्यैर्दीर्घिकाद्यैरलङ्कृते ॥ ७ ॥
ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैश्चान्यैश्च जातिभिः ।
वानप्रस्थैर्गृहस्थैश्च यतिभिर्ब्रह्मचारिभिः ॥ ८ ॥
सम्पन्नैर्गोकुलैश्चैव सर्वत्र समलङ्कृते ।
यवगोधूमचणकैर्माषमुद्गतिलेक्षुभिः ॥ ६ ॥
चीनकाद्यैस्तथा मेध्यैःशस्यैश्चान्यैश्च शोभिते ।
तत्र दीप्ते हुतवहे हूयमाने महामखे ॥ १० ॥
यजतां नैमिषेयाणां सत्रे द्वादशवार्षिके ।
आजग्मुस्तत्र मुनयस्तथाऽन्येऽपि द्विजातयः ॥ ११ ॥
तानागतान् द्विजांस्ते तु पूजां चक्रुर्यथोचिताम् ।
तेषु तत्रोपविष्टेषु ऋत्विग्भिः सहितेषु च ॥ १२ ॥
तत्राजगाम सूतस्तुमतिमाँल्लोमहर्षणः ।
तं दृष्ट्वा ते मुनिवराः पूजां चक्रुर्मुदान्विताः ॥ १३ ॥
सोऽपि तान् प्रतिपूज्यैव संविवेश वरासने ।
कथां चक्रुस्तदान्योन्यं सूतेन सहिता द्विजाः ॥१४॥
कथान्ते व्यासशिष्यं ते पप्रच्छुः संशयं मुदा ।
ऋत्विग्भिः सहिताः सर्व्वे सदस्यैः सह दीक्षिताः ॥ १५ ॥

मुनय ऊचुः ।

पुराणागमशास्त्राणि सेतिहासानि सत्तम ।
जानासि देवदैत्यानां चरितं जन्म कर्म्म च ॥ १६ ॥
न तेऽस्त्यविदितं किञ्चिद्वेदे शास्त्रे च भारते ।
पुराणे मोक्ष शास्त्रे च सर्व्वज्ञोऽसि महामते ॥ १७ ॥
यथापूर्व्वमिदं सर्व्वमुत्पन्नं सचराचरम् ।
ससुरासुरगन्धर्व्वं सयक्षोरगराक्षसम् ॥ १८ ॥
श्रोतुमिच्छामहे सूत ब्रूहि सर्व्वं यथा जगत् ।
बभूव भूयश्च यथा महाभाग भविष्यति ॥ १९ ॥
यतश्चैव जगत् सूत यतश्चैव चराचरम् ।
लीनमासीत्तथा यत्र लयमेष्यति यत्र च ॥ २० ॥

लोमहर्षण उवाच ।

अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे सर्व्वजिष्णवे ॥ २१ ॥
नमो हिरण्यगर्भाय हरये शङ्कराय च ।
वासुदेवाय ताराय सर्गस्थित्यन्तकर्म्मणे ॥ २२ ॥
एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः ।
अव्यक्ताव्यक्तभूताय विष्णवे मुक्तिहेतवे ॥ २३ ॥
सर्गस्थितिविनाशाय जगतो योऽजरामरः ।
मूलभूतो नमस्तस्मै विष्णवे परमात्मने ॥ २४ ॥
आधारभूतं विश्वस्याप्यणीयांसमणीयसाम् ।
प्रणम्य सर्व्वभूतस्थमच्युतं पुरुषोत्तमम् ॥ २५ ॥

ज्ञानस्वरूपमत्यन्तं निर्म्मलं परमार्थतः ।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥ २६ ॥
विष्णुं ग्रसिष्णुं विश्वस्य स्थितौ स्वर्गे तथा प्रभुम् ।
सर्व्वज्ञं जगतामीशमजमक्षयमव्ययम् ॥ २७ ॥
आद्यं सुसूक्ष्मं विश्वेशं ब्रह्मादीन् प्रणिपत्य च ।
इतिहासपुराणज्ञं वेदवेदाङ्गपारगम् ॥ २८ ॥
सर्व्वशास्त्रार्थतत्त्वज्ञं पराशरसुतं प्रभुम् ।
गुरुं प्रणम्य वक्ष्यामि पुराणं वेदसम्मितम् ॥ २९ ॥
कथयामि यथापूर्व्वं दक्षाद्यैर्मुनिसत्तमैः ।
पृष्टः प्रोवाच भगवानजयोनिः पितामहः ॥ ३० ॥
शृणुध्वं सम्प्रवक्ष्यामि कथां पापप्रणाशिनीम् ।
कथ्यमानां मया चित्रां बह्वर्थां श्रुतिविस्तराम् ॥ ३१ ॥
यस्त्विमां धारयेन्नित्यं शृणुयाद्वाप्यभीक्ष्णशः ।
स्ववंशधारणं कृत्वा स्वर्गलोके महीयते ॥ ३२ ॥
अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम् ।
प्रधानं पुरुषस्तस्मान्निर्म्ममे विश्वमीश्वरः ॥ ३३ ॥
तं बुध्यध्वं मुनिश्रेष्ठा ब्रह्माणममितौजसम् ।
स्रष्टारं सर्व्वभूतानां नारायणपरायणम् ॥ ३४ ॥
अहङ्कारस्तु महतस्तस्माद्भूतानि जज्ञिरे ।
भूतभेदाश्च भूतेभ्य इति सर्गः सनातनः ॥ ३५ ॥
विस्तरावयवं चैव यथाप्रज्ञं यथाश्रुति ।
कीर्त्त्यमानं शृणुध्वं वः सर्व्वेषां कीर्त्तिवर्द्धनम् ॥ ३६ ॥

कीर्त्तितं स्थिरकीर्त्तीनां सर्व्वेषां पुण्यवर्द्धनम् ।
ततः स्वयम्भूर्भगवान् सिसृक्षुर्विविधाः प्रजाः ॥ ३७ ॥
अप एव ससर्ज्जादौ तासु वीर्य्यमथासृजत् ।
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥ ३८ ॥
अयनं तस्य ताः पूर्व्वं तेन नारायणः स्मृतः ।
हिरण्यवर्णमभवत्तदन्तमुदकेशयम् ॥ ३९ ॥
तत्र जज्ञे स्वयं ब्रह्मा स्वयम्भूरिति नः श्रुतम् ।
हिरण्यवर्णो भगवानुसित्वा परिवत्सरम् ॥ ४० ॥
तदन्तमकरोद्द्वैधं दिवं भुवमथापि च ।
तयोः शकलयोर्म्मध्य आकाशमकरोत्प्रभुः ॥ ४१ ॥
अप्सु पारिप्लवां पृथ्वीं दिशश्च दशधा दधे ।
तत्र कालं मनो वाचं कामं क्रोधमथो रतिम् ॥ ४२ ॥
ससर्ज सृष्टिं तद्रूपां स्रष्टुमिच्छन्प्रजापतीन् ।
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ॥ ४३ ॥
वसिष्ठं च महातेजाः सोऽसृजत्सप्त मानसान् ।
सप्त ब्राह्मण इत्येते पुराणे निश्चयं गताः ॥ ४४ ॥
नारायणात्मकानां तु सप्तानां ब्रह्मजन्मनाम् ।
ततोऽसृजत् पुरा ब्रह्मा रुद्रं रोषात्मसम्भवम् ॥ ४५ ॥
सनत्कुमारं च विभुं पूर्व्वेषामपि पूर्व्वजम् ।
सप्तस्वेता अजायन्त प्रजा रुद्राश्च भो द्विजाः ॥ ४६ ॥
स्कन्दः सनत्कुमारश्च तेजः संक्षिप्य तिष्ठतः ।
तेषां सप्त महावंशा दिव्या देवगणान्विताः ॥ ४७ ॥

क्रियावन्तः प्रजावन्तो महर्षिभिरलङ्कृताः ।
विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च ॥ ४८ ॥
वयांसि च ससर्जादौ पर्जन्यश्च ससर्ज ह ।
ऋचो यजूंषि सामानि निर्ममे यज्ञसिद्धये ॥ ४९ ॥
साध्यानजनयद्देवानित्येवमनुसञ्ज्ञगुः ।
उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे ॥ ५० ॥
आपर्वस्य प्रजासर्गं सृजतो हि प्रजापतेः ।
सृज्यमानाः प्रजा नैव विवर्द्धन्ते यदा तदा ॥ ५१ ॥
द्विधा कृत्वात्मनो देहमर्द्धेन पुरुषोऽभवत् ।
अर्द्धेन नारी तस्यां तु सोऽसृजद्विविधाः प्रजाः ॥ ५२ ॥
दिवञ्च पृथिवीं चैव महिम्ना व्याप्य तिष्ठति ।
विराजमसृजद्विष्णुः सोऽसृजत् पुरुषं विराट् ॥ ५३ ॥
पुरुषं तं मनुं विद्यात्तस्य मन्वन्तरं स्मृतम् ।
द्वितीयं मानसस्यैतन्मनोरन्तरमुच्यते ॥ ५४ ॥
स वैराजः प्रजासर्गं ससर्ज पुरुषः प्रभुः ।
नारायणविसर्गस्य प्रजास्तस्याप्ययोनिजाः ॥ ५५ ॥
आयुष्मान् कीर्त्तिमान् पूर्णप्रज्ञावांश्च भवेन्नरः ।
आदिसर्गं विदित्वेमं यथेष्टां चाप्नुयाद्गतिम् ॥ ५६ ॥

इति श्रीब्रह्म महापुराणे आदिसर्गवर्णनं
प्रथमोऽध्यायः ॥ १ ॥

———

## द्वितीयोऽध्यायः ।

### तत्रादौ स्वयम्भुव मनुवंश वर्णनम्

लोमहर्षण उवाच ।

स सृष्ट्वा तु प्रजास्त्वेवमापवो वै प्रजापतिः ।
लेभे वै पुरुषः पत्नीं शतरूपामयोनिजाम् ॥ १ ॥
आपवस्य महिम्ना तु दिवमावृत्य तिष्ठतः ।
धर्मेणैव मुनिश्रेष्ठाः शतरूपा व्यजायत ॥ २ ॥
सा तु वर्षायुतं तप्त्वा तपः परमदुश्चरम् ।
भर्त्तारं दीप्ततपसं पुरुषं प्रत्यपद्यत ॥ ३ ॥
स वै स्वायम्भुवो विप्राः पुरुषो मनुरुच्यते ।
तस्यैकसप्ततियुगं मन्वन्तरमिहोच्यते ॥ ४ ॥
वैराजात् पुरुषाद्वीरं शतरूपा व्यजायत ।
प्रियव्रतोत्तानपादौ वीरात् काम्या व्यजायत ॥ ५ ॥
काम्या नाम सुता श्रेष्ठा कर्द्दमस्य प्रजापतेः ।
काम्यापुत्रास्तु चत्वारः सम्राट् कुक्षिर्विराट्प्रभुः ॥ ६ ॥
उत्तानपादं जग्राह पुत्रमत्रिः प्रजापतिः ।
उत्तानपादाच्चतुरः सूनृता सुषुवे सुतान् ॥ ७ ॥
धर्म्मस्य कन्या सुश्रोणी सूनृता नाम विश्रुता ।
उत्पन्ना वाजिमेधेन ध्रुवस्य जननी शुभा ॥ ८ ॥
ध्रुवञ्च कीर्त्तिमन्तञ्च आयुष्मन्तं वसुं तथा ।
उत्तानपादोऽजनयत् सूनतायां प्रजापतिः ॥ ९ ॥

ध्रुवो वर्षसहस्राणि त्रीणि दिव्यानि भो द्विजाः ।
तपस्तेपे महाभागः प्रार्थयन् सुमहद्यशः ॥ १० ॥
तस्मै ब्रह्मा ददौ प्रीतः स्थानमात्मसमं प्रभुः ।
अचलञ्चैव पुरतः सप्तर्षीणां प्रजापतिः ॥ ११ ॥
तस्याभिमानमृद्धिञ्च महिमानं निरीक्ष्य च ।
देवासुराणामाचार्य्यः श्लोकं प्रागुशना जगौ ॥ १२ ॥
अहोऽस्य तपसो वीर्य्यमहो श्रुतमहोऽद्भुतम् ।
यमद्य पुरतः कृत्वा ध्रुवं सप्तर्षयः स्थिताः ॥ १३ ॥
तस्माच्छ्लिष्टिं च भव्यं च ध्रुवाच्छम्भुर्व्यजायत ।
श्लिष्टेराधत्त सुच्छाया पञ्च पुत्रानकल्मषान् ॥ १४ ॥
रिपुं रिपुञ्जयं वीरं वृकलं वृकतेजसम् ।
रिपोराधत्त बृहती चक्षुषं सर्व्वतेजसम् ॥ १५ ॥
अजीजनत् पुष्करिण्यां वैरण्यां चाक्षुषं मनुम् ।
प्रजापतेरात्मजायां वीरणस्य महात्मनः ॥ १६ ॥
मनोरजायन्त दश नड्वलायां महौजसः ।
कन्यायां मुनिशार्दूला वैराजस्य प्रजापतेः ॥ १७ ॥
कुत्सः पुरुः शतद्युम्नस्तपस्वी सत्यवाक्कविः ।
अग्निष्टुदतिरात्रश्च सुद्युम्नश्चेति ते नव ॥ १८ ॥
अभिमन्युश्च दशमो नड्वलायां महौजसः ।
पुरोरजनयत् पुत्रान् षड़ाग्नेयी महाप्रभान् ॥ १९ ॥
अङ्गं सुमनसं ख्यातिं क्रतुमङ्गिरसं गयम् ।
अङ्गात् सुनीथापत्यं वै वेनमेकं व्यजायत ॥ २० ॥

अपचारेण वेनस्य प्रकोपः सुमहानभूत् ।
प्रजार्थमृषयो यस्य ममन्थुर्दक्षिणं करम् ॥ २१ ॥

वेनस्य मथिते पाणौ स बभूव महान्नृपः ।
तं दृष्ट्वा मुनयः प्राहुरेष वै मुदिताः प्रजाः ॥ २२ ॥

करिष्यति महातेजा यशश्च प्राप्स्यते महत् ।
स धन्वी कवची जातो जलज्ज्वलनसन्निभः ॥ २३ ॥

पृथुर्वैन्यस्तथा चेमां ररक्ष क्षत्रपूर्व्वजः ।
राजसूयाभिषिक्तानामाद्यः स वसुधाधिपः ॥ २४ ॥

तस्माच्चैव समुत्पन्नौ निपुणौ सूतमागधौ ।
तेनेवं गौर्म्मुनिश्रेष्ठा दुग्धा शस्यानि भूभृता ॥ २५ ॥

प्रजानां वृत्तिकामेन देवैः सर्षिगणैः सह ।
पितृभिर्दानवैश्चैव गन्धर्वैरप्सरोगणैः ॥ २६ ॥

सर्पैः पुण्यजनैश्चैव वीरुद्भिः पर्व्वतैस्तथा ।
तेषु तेषु च च पात्रेषु दुह्यमाना वसुन्धरा ॥ २७ ॥

प्रादाद्यथेप्सितं क्षीरं तेन प्राणानधारयन् ।
पृथोस्तु पुत्रौ धर्म्मज्ञौ जज्ञातेऽन्तर्धिपातिनौ ॥ २८ ॥

शिखण्डिनी हविर्धानमन्तर्धानाद्व्याजायत ।
हविर्धानात् षडाग्नेयी धिषणाजनयत् सुतान् ॥ २९ ॥

प्राचीनवर्हिषंशुक्रं गयं कृष्णं व्रजाजिनौ ।
प्राचीनवर्हिर्भगवान्महानासीत्प्रजापतिः ॥ ३० ॥
हविर्धानान्मुनिश्रेष्ठा येन संवर्द्धिताः प्रजाः ।

प्राचीनाग्राः कुशास्तस्य पृथिव्यां द्विजसत्तमाः ।*
प्राचीनबर्हिर्भगवान् पृथिवीतलचारिणीः ॥ ३१ ॥

समुद्रतनयायां तु कृतदारोऽभवत् प्रभुः ।
महतस्तपसः पारे सवर्णायां प्रजापतिः ॥ ३२ ॥

सवर्णाधत्त सामुद्री दश प्राचीनबर्हिषः ।
सर्व्वान् प्राचेतसो नाम धनुर्व्वेदस्य पारगान् ॥ ३३ ॥

अपृथग्धर्म्मचरणास्तेऽतप्यन्त महत्तपः ।
दश वर्षसहस्राणि समुद्रसलिलेशयाः ॥ ३४ ॥

तपश्चरत्सु पृथिवीं प्रचेतःसु महीरुहाः ।
अरक्ष्यमाणामावव्रुर्बभूवाथ प्रजाक्षयः ॥ ३५ ॥

नाशकन्मारुतो वातुं वृतं खमभवद्द्रुमैः ।
दश वर्षसहस्राणि न शेकुश्चेष्टितुं प्रजाः ॥ ३६ ॥

तदुपश्रुत्य तपसा युक्ताः सर्व्वे प्रचेतसः ।
मुखेभ्यो वायुमग्निं च ससृजुर्जातमन्यवः ॥ ३७ ॥

उन्मूलानथ वृक्षांस्तु कृत्वा वायुरशोषयत् ।
तानग्निरदहद्घोर एवमासीद्द्रुमक्षयः ॥ ३८ ॥

द्रुमक्षयमथो बुद्ध्वा किञ्चिच्छिष्टेषु शाखिषु ।
उपगम्याब्रवीदेतांस्तदा सोमः प्रजापतीन् ॥ ३९ ॥

कोपं यच्छत राजानः सर्व्वे प्राचीनबर्हिषः ।
वृक्षशून्या कृता पृथ्वी शाम्येतामग्निमारुतौ ॥ ४० ॥

---

* इदमर्धं क्वचिन्न लक्ष्यते ।

रत्नभूता च कन्येयं वृक्षाणां वरवर्णिनी ।
भविष्यं जानता तात धृता गर्भेण वै मया ॥ ४१ ॥

मारिषा नाम नाम्नैषा वृक्षाणामिति निर्म्मिता ।
भार्य्या वोऽस्तु महाभागाः सोमवंशविवर्द्धिनी ॥ ४२ ॥

युष्माकं तेजसोऽर्द्धेन मम चार्द्धेन तेजसः ।
अस्यामुत्पत्स्यते विद्वान् दक्षो नाम प्रजापतिः ॥ ४३ ॥

स इमां दग्धभूयिष्ठां युष्मत्तेजोमयेन वै ।
अग्निनाग्निसमो भूयः प्रजाः संवर्द्धयिष्यति ॥ ४४ ॥

ततः सोमस्य वचनाज्जगृहुस्ते प्रचेतसः ।
संहृत्य कोपं वृक्षेभ्यः पत्नीं धर्म्मेण मारिषाम् ॥ ४५ ॥

दशभ्यस्त प्रचेतोभ्यो मारिषायां प्रजापतिः ।
दक्षो जज्ञे महातेजाः सोमस्यांशेन भो द्विजाः ॥ ४६ ॥

अचरांश्च चरांश्चैव द्विपदोऽथ चतुष्पदः ।
स सृष्ट्वा मनसा दक्षः पश्चादसृजत स्त्रियः ॥ ४७ ॥

ददौ दश स धर्म्माय कश्यपाय त्रयोदश ।
शिष्टाः सोमाय राज्ञे च नक्षत्राख्या ददौ प्रभुः ॥ ४८ ॥

तासु देवाः खगा गावो नागा दितिजदानवाः ।
गन्धर्व्वाप्सरसश्चैव जज्ञिरेऽन्याश्च जातयः ॥ ४९ ॥

ततः प्रभृति विप्रेन्द्राः प्रजा मैथुनसंभवाः ।
सङ्कल्पाद्दर्शनात्स्पर्शात्पूर्व्वेषां प्रोच्यते प्रजाः ॥ ५० ॥

मुनय ऊचुः।

देवानां दानवानाञ्च गन्धर्वोरगरक्षसाम्।
सम्भवस्तु श्रुतोऽस्माभिर्दक्षस्य च महात्मनः॥ ५१॥
अङ्गुष्ठाद्ब्रह्मणो जज्ञे दक्षः किल शुभव्रतः।
वामाङ्गुष्ठात्तथा चैवं तस्य पत्नी व्यजायत॥ ५२॥
कथं प्राचेतसत्वं स पुनर्लेभे महातपाः।
एत न्नः संशयं सूत व्याख्यातुं त्वमिहार्हसि॥
दौहित्रश्चैव सोमस्य कथं श्वशुरतां गतः॥ ५३॥

लोमहर्षण उवाच।

उत्पत्तिश्च निरोधश्च नित्यं भूतेषु भोद्विजाः।
ऋषयोऽत्र न मुह्यन्ति विद्यावन्तश्च ये जनाः॥ ५४॥
युगे युगे भवन्त्येते पुनर्दक्षादयो नृपाः।
पुनश्चैव निरुध्यन्ते विद्वांस्तत्र न मुह्यति॥ ५५॥
ज्यैष्ठं कानिष्ठ्यमप्येषांपूर्व्वंनासीद्द्विजोत्तमाः।
तप एव गरीयोऽभूत्प्रभावश्चैव कारणम्॥ ५६॥
इमां विसृष्टिं दक्षस्य यो विद्यात् सचराचराम्।
प्रजावानायुरुत्तीर्णः स्वर्गलोके महीयते॥ ५७॥

इति श्रीब्राह्मे महापुराणे सृष्टिकथनं नाम
द्वितीयोऽध्यायः॥ २॥

——

## तृतीयोऽध्यायः ।

### देवदानवोत्पत्ति वर्णनम्

मुनय ऊचुः ।

देवानां दानवानां च गन्धर्व्वोरगरक्षसाम् ।
उत्पत्तिं विस्तरेणैव लोमहर्षण कीर्त्तय ॥ १ ॥

लोमहर्षण उवाच ।

प्रजाः सृजति व्यादिष्टः पूर्व्वं दक्षः स्वयम्भुवा ।
यथा ससर्ज भूतानि तथा शृणुत भो द्विजाः ॥ २ ॥
मानसान्येव भूतानि पूर्व्वमेवासृजत् प्रभुः ।
ऋषीन्देवान्सगन्धर्व्वानसुरान्यक्षराक्षसान् ॥ ३ ॥
यदास्य मानसी विप्रा न व्यवर्द्धत वै प्रजाः ।
तदा सञ्चिन्त्य धर्म्मात्मा प्रजाहेतोः प्रजापतिः ॥ ४ ॥
स मैथुनेन धर्म्मेण सिसृक्षुर्विविधाः प्रजाः ।
असिक्नीमावहत् पत्नीं वीरणस्य प्रजापतेः ॥ ५ ॥
सुतां सुतपसा युक्तां महतीं लोकधारिणीम् ।
अथ पुत्रसहस्राणि वैरण्यां पञ्च वीर्य्यवान् ॥ ६ ॥
असिक्न्यां जनयामास दक्ष एव प्रजापतिः ।
तांस्तु दृष्ट्वा महाभागान्संविवर्द्धयिषून् प्रजाः ॥ ७ ॥
देवर्षिः प्रियसंवादो नारदः प्राब्रवीदिदम् ।
नाशाय वचनं तेषां शापायैवात्मनस्तथा ॥ ८ ॥
यं कश्यपः सुतवरं परमेष्ठी व्यजीजनत् ।
दक्षस्य वै दुहितरि दक्षशापभयान्मुनिः ॥ ९ ॥

पूर्व्वं स हि समुत्पन्नो नारदः परमेष्ठिनः ।
असिक्न्यामथ वैरण्यां भूयो देवर्षिसत्तमः ॥ १० ॥
तं भूयो जनयामास पितेव मुनिपुङ्गवम् ।
तेन दक्षस्य वै पुत्रा हर्य्यश्वा इति विश्रुताः ॥ ११ ॥
निर्म्मथ्य नाशिताः सर्व्वे विधिना च न संशयः ।
तस्योद्यतस्तदा दक्षो नाशायामितविक्रमः ॥ १२ ॥
ब्रह्मर्षीन् पुरतः कृत्वा याचितः परमेष्ठिना ।
ततोऽभिसन्धिश्चक्रे वै दक्षस्य परमेष्ठिना ॥ १३ ॥
कन्यायां नारदो मह्यं तव पुत्रो भवेदिति ।
ततो दक्षः सुतां प्रादात् प्रियां वै परमेष्ठिने
स तस्यां नारदो जज्ञे भूयः शापभयादृषिः ॥ १४ ॥

मुनय उचुः ।

कथं प्रणाशिताः पुत्रा नारदेन महर्षिणा ।
प्रजापतेः सूतवर्य्य श्रोतुमिच्छाम तत्त्वतः ॥ १५ ॥

लोमहर्षण उवाच ।

दक्षस्य पुत्रा हर्य्यश्वा विवर्द्धयिषवः प्रजाः ।
समागता महावीर्य्या नारदस्तानुवाच ह ॥ १६ ॥

नारद उवाच ।

बालिशा बत यूयं वै नास्या जानीत वै भुवः ।
प्रमाणं स्रष्टुकामा वै प्रजाः प्राचेतसात्मजाः ॥ १७ ॥
अन्तरूर्द्ध्वमधश्चैव कथं सृजथ वै प्रजाः ।
ते तु तद्वचनं श्रुत्वा प्रयाताः सर्व्वतो दिशः ॥ १८ ॥

अद्यापि न निवर्त्तन्ते समुद्रेभ्य इवापगाः ।
हर्यश्वेष्वथ नष्टेषु दक्षः प्राचेतसः पुनः ॥ १६ ॥
वैरण्यामथ पुत्राणां सहस्रमसृजत्प्रभुः ।
विवर्द्धयिषवस्ते तु शवलाश्वास्तथा प्रजाः ॥ २० ॥
पूर्व्वोक्तं वचनं ते तु नारदेन प्रचोदिताः ।
अन्योन्यमूचुस्ते सर्व्वे सम्यगाह महानृषिः ॥ २१ ॥
भ्रातृणां पदवीं ज्ञातुं गन्तव्यं नात्र संशयः ।
ज्ञात्वा प्रमाणं पृथ्व्याश्च सूक्ष्मं स्रक्ष्यामहे प्रजाः ॥ २२ ॥
तेऽपि तेनैव मार्गेण प्रयाताः सर्व्वतो दिशम् ।
अद्यापि न निवर्त्तन्ते समुद्रेभ्य इवापगाः ॥ २३ ॥
तदा प्रभृति वै भ्राता भ्रातुरन्वेषणे द्विजाः ।
प्रयातो नश्यति क्षिप्रं तन्न कार्य्यं विपश्चिता ॥ २४ ॥
तांश्चैव नष्टान् विज्ञाय पुत्रान् दक्षः प्रजापतिः ।
षष्टिं ततोऽसृजत् कन्या वैरण्यामिति नः श्रुतम् ॥ २५ ॥
तास्तदा प्रतिजग्राह भार्य्यार्थं कश्यपः प्रभुः ।
सोमो धर्म्मश्च भो विप्रास्तथैवान्ये महर्षयः ॥ २६ ॥
ददौ स दश धर्म्माय कश्यपाय त्रयोदश ।
सप्तविंशतिः सोमाय चतस्रोऽरिष्टनेमिने ॥ २७ ॥
द्वे चैव बहुपुत्राय द्वे चैवाङ्गिरसे तथा ।
द्वे कृशाश्वाय विदुषे तासां नामानि मे शृणु ॥ २८ ॥
अरुन्धती वसुर्यामी लम्बा भानुर्मरुत्वती ।
सङ्कल्पा च मुहूर्त्ता च साध्या विश्वा च भो द्विजाः ॥ २९ ॥

धर्म्मपत्न्यो दश त्वेतास्तास्त्वपत्यानि बोधत ।
विश्वेदेवास्तु विश्वायाः साध्या साध्यान् व्यजायत ॥ ३० ॥
मरुत्वत्यां मरुत्वन्तो वसोस्तु वसवः सुताः ।
भानोस्तु भानवः पुत्रा मुहूर्त्तास्तु मुहूर्त्तजाः ॥ ३१ ॥
लम्बायाश्चैव घोषोऽथ नागवीथी च यामिजा ।
पृथिवीविषयं सर्व्वमरुन्धत्यां व्यजायत ॥ ३२ ॥
सङ्कल्पायास्तु विश्वात्मा जज्ञे सङ्कल्प एव हि ।
नागवीथ्याश्च यामिन्यां वृषलश्च व्यजायत ॥ ३३ ॥
परा याः सोमपत्नीश्च दक्षः प्राचेतसो ददौ ।
सर्व्वा नक्षत्रनाम्न्यस्ता ज्योतिषे परिकीर्त्तिताः ॥ ३४ ॥
ये त्वन्ये ख्यातिमन्तो वै देवा ज्योतिष्पुरोगमाः ।
वसवोऽष्टौ समाख्यातास्तेषां वक्ष्यामि विस्तरम् ॥ ३५ ॥
आपो ध्रुवश्च सोमश्च धवश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवो नामभिः स्मृताः ॥ ३६ ॥
आपस्य पुत्रो वैतण्डः श्रमः श्रान्तो मुनिस्तथा ।
ध्रुवस्य पुत्रो भगवान् कालो लोकप्रकालनः ॥ ३७ ॥
सोमस्य भगवान् वर्च्चा वर्च्चस्वी येन जायते ।
धवस्य पुत्रो द्रविणो हुतहव्यवहस्तथा ॥ ३८ ॥
मनोहरायाः शिशिरः प्राणोऽथ रमणस्तथा ।
अनिलस्य शिवा भार्य्या तस्याः पुत्रो मनोजवः ।
अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य च ॥ ३९ ॥

अग्निपुत्रः कुमारस्तु शरस्तम्बे श्रिया वृतः ।
तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजः ॥ ४० ॥
अपत्यं कृत्तिकानां तु कार्त्तिकेय इति स्मृतः ।
प्रत्यूषस्य विदुः पुत्रमृषिं नाम्नाथ देवलम् ॥ ४१ ॥
द्वौ पुत्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ ।
वृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मवादिनी ॥ ४२ ॥
योगसिद्धा जगत् कृत्स्नमसक्ता विचचार ह ।
प्रभासस्य तु सा भार्य्या वसूनामष्टमस्य तु ॥ ४३ ॥
विश्वकर्म्मा महाभागो यस्यां जज्ञे प्रजापतिः ।
कर्त्ता शिल्पसहस्राणां त्रिदशानाञ्च वार्द्धकिः ॥ ४४ ॥
भूषणानाञ्च सर्व्वेषां कर्त्ता शिल्पवतां वरः ।
यः सर्व्वेषां विमानानि दैवतानां चकार ह ॥ ४५ ॥
मानुषाश्चोपजीवन्ति यस्य शिल्पं महात्मनः ।
सुरभी कश्यपाद्रुद्रानेकादश विनिर्म्ममे ॥ ४६ ॥
महादेवप्रसादेन तपसा भाविता सती ।
अजैकपादहिर्बुध्न्यस्त्वष्टा रुद्रश्च वीर्य्यवान् ॥ ४७ ॥
हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः ।
वृषाकपिश्च शम्भुश्च कपर्द्दी रैवतस्तथा ॥ ४८ ॥
मृगव्याधश्च शर्व्वश्च कपाली च द्विजोत्तमाः ।
एकादशैते विख्याता रुद्रास्त्रिभुवनेश्वराः ॥ ४९ ॥
शतं त्वेवं समाख्यातं रुद्राणाममितौजसाम् ।
पुराणे मुनिशार्दूला यैर्व्याप्तं सचराचरम् ॥ ५० ॥

दारान् शृणुध्वं विप्रेन्द्राः कश्यपस्य प्रजापतेः।
अदितिर्दितिर्दनुश्चैव अरिष्टा सुरसा खसा ॥ ५१ ॥
सुरभिर्विनता चैव ताम्रा क्रोधवशा इला।
कद्रुर्मुनिश्च भो विप्रास्तास्वपत्यानि बोधत ॥ ५२ ॥
पूर्व्वमन्वतरे श्रेष्ठाद्वादशासन् सुरोत्तमाः।
तुषिता नाम तेऽन्योन्यमूचुर्वैवस्वतेऽन्तरे ॥ ५३ ॥
उपस्थितेऽतियशसश्चाक्षुषस्यान्तरे मनोः
हितार्थं सर्व्वलोकानां समागम्य परस्परम् ॥ ५४ ॥
आगच्छत द्रुतं देवा अदितिं सम्प्रविश्य वै।
मन्वन्तरे प्रसूयामस्तन्नः श्रेयो भविष्यति ॥ ५५ ॥
एवमुक्ता तु ते सर्व्वे चाक्षुषस्यान्तरे मनोः
मारीचात् कश्यपाज्जाजास्त्वदित्या दक्षकन्यया ॥ ५६ ॥
तत्र विष्णुश्च शक्रश्च जज्ञाते पुनरेव हि।
अर्य्यमा चैव धाता च त्वष्टा पूषा तथैव च ॥ ५७ ॥
विवस्वान् सविता चैव मित्रो वरुण एव च।
अंशो भगश्चातितेजा आदित्या द्वादश स्मृताः ॥ ५८ ॥
चाक्षुषस्यान्तरे पूर्व्वमासंस्ते तुषिताः सुराः।
वैवस्वतेऽन्तरे ते वा आदित्या द्वादश स्मृताः *
सप्तविंशति ताः प्रोक्ताः सोमपत्न्यो महाव्रताः
तासामपत्यान्यभवन् दीप्तान्यमिततेजसः ॥ ५६ ॥

---

* क्वचिदयं श्लोकोनास्ति।

प्रविश्याऽऽयतनं विष्णोः कृत्वा तं त्रिः प्रदक्षिणम् ।
संकर्षणं स्वमन्त्रेण भक्त्याऽऽपूज्यप्रसादयेत् ॥ २१ ॥
नमस्ते हलधृग्राम नमस्ते मुशलायुध ।
नमस्ते रेवतीकान्त नमस्ते भक्तवत्सल ॥ २२ ॥
नमस्ते बलिनां श्रेष्ठ नमस्ते धरणीधर ।
प्रलम्बारे नमस्तेऽस्तु त्राहि मां कृष्णपूर्वज ॥ २३ ॥
एवं प्रसाद्य चानन्तमजेयं त्रिदशार्चितम् ।
कैलासशिखराकारं चन्द्रात्कान्ततराननम् ॥ २४ ॥
नीलवस्त्रधरं देवं फणाविकटमस्तकम् ।
महाबलं हलधरं कुण्डलैकविभूषितम् ॥ २५ ॥
रौहिणेयं नरो भक्त्या लभेदभिमतं फलम् ।
सर्वपापैर्विनिर्मुक्तो विष्णुलोकं स गच्छति ॥ २६ ॥
आभूतसंप्लवं यावद्भुक्त्वा तत्र सुखं नरः ।
पुण्यक्षयादिहाऽऽगत्य प्रवरे योगिनां कुले ॥ २७ ॥
ब्राह्मणप्रवरो भूत्वा सर्वशास्त्रार्थपारगः ।
ज्ञानं तत्र समासाद्य मुक्तिं प्राप्नोति दुर्लभाम् ॥ २८ ॥
एवमभ्यर्च्य हलिनं ततः कृष्णं विचक्षणः ।
द्वादशाक्षरमन्त्रेण पूजयेत्सुसमाहितः ॥ २९ ॥
द्विषट्कवर्णमन्त्रेण भक्त्या ये पुरुषोत्तमम् ।
पूजयन्ति सदा धीरास्ते मोक्षं प्राप्नुवन्ति वै ॥ ३० ॥
न तां गतिं सुरा यान्ति योगिनो नैव सोपमाः ।
यां गतिं यान्ति भो विप्रा द्वादशाक्षरतत्पराः ॥ ३१ ॥

तस्मात्तेनैव मन्त्रेण भक्त्या कृष्णं जगद्गुरुम् ।
संपूज्य गन्धपुष्पाद्यैः प्रणिपत्य प्रसादयेत् ॥ ३२ ॥
जय कृष्ण जगन्नाथ जय सर्वाघनाशन ।
जय चाणूरकेशिघ्न जय कंसनिषूदन ॥ ३३ ॥
जय पद्मपलाशाक्ष जय चक्रगदाधर ।
जय नीलाम्बुदश्याम जय सर्वसुखप्रद ॥ ३४ ॥
जय देव जगत्पूज्य जय संसारनाशन ।
जय लोकपते नाथ जय वाञ्छाफलप्रद ॥ ३५ ॥
संसारसागरे घोरे निःसारे दुःखफेनिले ।
क्रोधग्राहाकुले रौद्रे विषयोदकसंप्लवे ॥ ३६ ॥
नानारोगोर्मिकलिले मोहावर्तसुदुस्तरे ।
निमग्नोऽहं सुरश्रेष्ठ त्राहि मां पुरुषोत्तम ॥ ३७ ॥
एवं प्रसाद्य देवेशं वरदं भक्तवत्सलम् ।
सर्वपापहरं देवं सर्वकामफलप्रदम् ॥ ३८ ॥
पीनांसं द्विभुजं कृष्णं पद्मपत्रायतेक्षणम् ।
महोरस्कं महाबाहुं पीतवस्त्रं शुभाननम् ॥ ३९ ॥
शङ्खचक्रगदापाणिं मुकुटाङ्गदभूषणम् ।
सर्वलक्षणसंयुक्तं वनमालाविभूषितम् ॥ ४० ॥
दृष्ट्वा नरोऽञ्जलिं कृत्वा दण्डवत्प्रणिपत्य च ।
अश्वमेधसहस्राणां फलं प्राप्नोति वै द्विजाः ॥ ४१ ॥
यत्फलं सर्वतीर्थेषु स्नाने दाने प्रकीर्तितम् ।
नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥ ४२ ॥

यत्फलं सर्वरत्नाद्यैरिष्टे बहुसुवर्णके ।
नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥ ४३ ॥
यत्फलं सर्ववेदेषु सर्वयज्ञेषु यत्फलम् ।
तत्फलं समवाप्नोति नरः कृष्णं प्रणम्य च ॥ ४४ ॥
यत्फलं सर्वदानेन यमेन नियमेन च ।
नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥ ४५ ॥
तपोभिर्विविधैरुग्रैर्यत्फलं समुदाहृतम् ।
नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥ ४६ ॥
यत्फलं ब्रह्मचर्येण सम्यक्चीर्णेन तत्कृतम् ।
नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥ ४७ ॥
यत्फलं च गृहस्थस्य यथोक्ताचारवर्तिनः ।
नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥ ४८ ॥
यत्फलं वनवासेन वानप्रस्थस्य कीर्तितम् ।
नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥ ४९ ॥
संन्यासेन यथोक्तेन यत्फलं समुदाहृतम् ।
नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ॥ ५० ॥
किं चात्र बहुनोक्तेन माहात्म्ये तस्य भो द्विजाः ।
दृष्ट्वा कृष्णं नरो भक्त्या मोक्षं प्राप्नोति दुर्लभम् ॥ ५१ ॥
पापैर्विमुक्तः शुद्धात्मा कल्पकोटिसमुद्भवैः ।
श्रिया परमया युक्तः सर्वैः समुदितो गुणैः ॥ ५२ ॥
सर्वकामसमृद्धेन विमानेन सुवर्चसा ।
त्रिसप्तकुलमुद्धृत्य नरो विष्णुपुरं व्रजेत् ॥ ५३ ॥

तत्र कल्पशतं यावद्भुक्त्वा भोगान्मनोरमान् ।
गन्धर्वाप्सरसैः सार्धं यथा विष्णुश्चतुर्भुजः ॥ ५४ ॥
च्युतस्तस्मादिहाऽऽयातो विप्राणां प्रवरे कुले ।
सर्वज्ञः सर्ववेदी च जायते गतमत्सरः ॥ ५५ ॥
स्वधर्मनिरतः शान्तो दाता भूतहिते रतः ।
आसाद्य वैष्णवं ज्ञानं ततो मुक्तिमवाप्नुयात् ॥ ५६ ॥
ततः संपूज्य मन्त्रेण सुभद्रां भक्तवत्सलाम् ।
प्रसादयेत्ततो विप्राः प्रणिपत्य कृताञ्जलिः ॥ ५७ ॥
नमस्ते सर्वगे देवि नमस्ते शुभसौख्यदे ।
त्राहि मां पद्मपत्राक्षि कात्यायनि नमोऽस्तु ते ॥ ५८ ॥
एवं प्रसाद्य तां देवीं जगद्धात्रीं जगद्धिताम् ।
बलदेवस्य भगिनीं सुभद्रां वरदां शिवाम् ॥ ५९ ॥
कामगेन विमानेन नरो विष्णुपुरं व्रजेत् ।
आभूतसंप्लवं यावत्क्रीडित्वा तत्र देववत् ॥ ६० ॥
इह मानुषतां प्राप्तो ब्राह्मणो वेदविद्भवेत् ।
प्राप्य योगं हरेस्तत्र मोक्षं च लभते ध्रुवम् ॥ ६१ ॥

इति श्रीमहापुराण आदिब्राह्मे स्वयंभुऋषिसंवादे कृष्णदर्शन-
माहात्म्यं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

श्लोकानामादितः समष्ट्यङ्काः—३८७८

———

